श्री विजयधर्मसूरि जैन ग्रंथमाला पु० ३७.




# श्री पर्वकथा संग्रहः ।

सम्पादको

न्याय-साहित्यतीर्थः तर्कालङ्कारश्च

स्व० मुनिश्रीहिमांशुविजयः ।




धर्म सं. १५

मूल्य ०-४-०

वीर संवत् २४६३ विक्रम सं. १९९३

प्रकाशक,
दीपचंद बांठीया ।
मंत्री, श्रीविजयधर्मसूरिजैनग्रंथमाला,
छोटा सराफा, उज्जैन ( मालवा ) ।

द्वितीयावृत्तिः
१००० ।

मुद्रक,
शाह गुलाबचंद लल्लुभाई,
श्री महोदय प्रिन्टींग प्रेस,
दाणापीठ, भावनगर ।

# निवेदन ।

आ पर्वकथासंग्रहनी पहेली आवृत्ति घणां वर्षो पहेलां श्री यशोविजय जैन ग्रंथमाला तरफथी प्रकाशित थई हती । आ बीजी आवृत्ति स्व. मुनिराज श्री हिमांशुविजयजीए, अति शुद्ध अने नोटो आपीने एनी उपयोगितामां खास वधारो कर्यो छे । पुस्तक बहार पडे, ते पहेलां, सिंधना विहारमां तेमनुं स्वर्गवासी थवुं, ए घणुंज दुःखनुं कारण बन्युं छे ।

आ पुस्तक छपाववामां मुनिराज श्री विद्याविजयजीना उपदेशथी, आहोर ( मारवाड ) ना पुनमिया उपाश्रयना निम्न लिखित श्रावकोए मदद करी छे,

| | |
|---|---|
| १०० चंदनमलजी गोडीदासजी | ४१ मूता ताराचंदजी |
| ५० मूता नेमचंदजी रतनाजी | ३५ नेमिचंदजी कस्तूरचंदजी |

२५ मूता साहेबचंदजी

अमे तेमनो आभार मानीए छीए ।

प्रकाशक ।

अर्हम् ।

श्रीसर्वज्ञाय नमः ।

श्रीकनककुशलगणिविरचितं

# श्रीज्ञानपञ्चमीमाहात्म्यम् ।



श्रीमत्पार्श्वजिनाधीशं फलवर्द्धिपुरस्थितम् । प्रणम्य परया भक्त्या सर्वाभीष्टार्थसाधकम् ॥ १ ॥
शुक्लकार्त्तिकपञ्चम्या माहात्म्यं वर्ण्यते तथा। भव्यानामुपकाराय यथोक्तं पूर्वसूरिभिः ॥ २ ॥(युग्मम्)
भुवने हि परं ज्ञानं ज्ञानं सर्वार्थसाधकम् । अनिष्टवस्तुविस्तारवारकं ज्ञानमीरितम् ॥ ३ ॥
ज्ञानादासाद्यते मुक्तिर्ज्ञानात् स्वर्गोद्भवं सुखम् । लभन्ते प्राणिनो यस्मात् तज्ज्ञानं स्वर्द्रुमोपमम् ॥ ४ ॥
भव्यैरासाद्यते ज्ञानं पञ्चम्याराधनाद् ध्रुवम् । अतः प्रमादमुत्सृज्याऽऽराध्या सा विधिना तथा ॥ ५ ॥
गुणमञ्जरीवरदत्ताभ्यामाराधिता यथा। पञ्चमी भावतोऽथात्र दृष्टान्तः प्रोच्यते तयोः ॥ ६ ॥ (युग्मम्)
जम्बूद्वीपेऽत्र भरते पुरं पद्मपुराभिधम् । ऋद्धिपूर्णं जनाऽऽकीर्णं प्रवरं स्वःपुरोपमम् ॥ ७ ॥

प र्व क था सं ग्र हः

यत्र निस्त्रिंशता खड्गे बन्धनं कुसुमेषु च। दण्डः प्रासादशृङ्गेषु जनेषु न कदाचन ॥ ८ ॥
तत्र भूपोऽजितसेनो बभूव भुवि विश्रुतः । सर्वाङ्गीणगुणाऽऽकीर्णा राज्ञी तस्य यशोमती ॥ ९ ॥
वरदत्तस्तयोः पुत्रो रूपलावण्यशोभितः । अष्टवर्षप्रमाणोऽसौ विनयादिगुणान्वितः ॥ १० ॥
पित्रा बुधान्तिके सोऽथ विद्याग्रहणहेतवे । स्थापितः पण्डितोऽप्येनमध्यापयति सोद्यमः ॥ ११ ॥
परमक्षरमात्रं तन्मुखे चटति नोद्यमात् । लक्षणादिकशास्त्राणां वार्त्ता दूरं गता ततः ॥ १२ ॥
क्रमात् स यौवनं प्राप्तः पूर्वकर्मोदयादथ । कुष्ठैर्विनष्टदेहत्वाद् रतिं न प्राप कर्हिचित् ॥ १३ ॥
इतश्च तत्रैव पुरे सिंहदासोऽस्ति श्रेष्ठिराट् । जिनधर्मरतः सप्तकोटिस्वर्णः प्रसिद्धिभाक् ॥ १४ ॥
कर्पूरतिलका नाम्नी भार्या तस्य गुणाश्रिता । पतिचित्तानुगा चारुशीलालङ्काररराजिनी ॥ १५ ॥
तयोरद्भुतविनया तनया गुणमञ्जरी । रोगैरुपद्रुता शश्वद् वचने मूकतां गता ॥ १६ ॥
विविधैरौषधैस्तस्या रोगशान्तिर्न जायते । न च कोऽपि तदुद्वाहं करोति प्रमदाऽऽवहम् ॥ १७ ॥
तस्याः षोडशवर्षीया बहुदुःखेन दुःखितः । मातृपित्रादिसकलस्वजनः समजायत ॥ १८ ॥

यतः—

" याचको वञ्चको व्याधिः पञ्चत्वं मर्ममापकः । योगिनामप्यमी पञ्च प्रायेणोद्वेगहेतवः ॥ १ ॥ "


प । वं । क । था । सं । ग्र । हः

तत्रैकदा पुरे श्रीमद्विजयसेनसूरयः । चतुर्ज्ञानधरा धीराः समाजग्मुर्गुरूत्तमाः ॥१९॥
सर्वोऽपि नगरीलोकः सपुत्रो भूपतिस्तथा । सकुटुम्बः सिंहदासो वन्दनार्थमुपागतः ॥२०॥
तिस्रः प्रदक्षिणाः कृत्वा वन्दित्वा विधिपूर्वकम् । उपविष्टा गुरोरग्रे राजाऽऽद्याः सपरिच्छदाः ॥२१॥
प्राणिनामुपकराय देशना क्लेशनाशिनी । प्रारेभे गुरुणा ज्ञानगुरुणा करुणाभृता ॥२२॥
ज्ञानस्याऽऽराधने यत्नोऽध्ययनश्रवणादिभिः । भव्यैर्विधेयः सततं निर्वाणपदमिच्छुभिः ॥२३॥
विराधयन्ति ये ज्ञानं मनसा ते भवान्तरे । स्युः शून्यमनसो मर्त्या विवेकपरिवर्जिताः ॥२४॥
विराधयन्ति ये ज्ञानं वचसाऽपि हि दुर्धियः । मूकत्वमुखरोगित्वदोषस्तेषामसंशयम् ॥२५॥
विराधयन्ति ये ज्ञानं कायेनाऽयत्नवर्त्तिना । दुष्टकुष्ठादिरोगाः स्युस्तेषां देहे विगर्हिते ॥२६॥
मनोवाक्काययोगैर्ये ज्ञानस्याऽऽशातनां सदा । कुर्वते मूढमतयः कारयन्ति परानपि ॥२७॥
तेषां परभवे पुत्रकलत्रसुहृदां क्षयः । धनधान्यविनाशश्च तथाऽऽधिव्याधिसंभवः ॥२८॥ (युग्मम्)
इत्यादिदेशनां श्रुत्वा सिंहदासो जगौ मुनिम् । भगवन् ! कर्मणा केन रोगा जाताः सुतातनौ ? ॥२९॥
गुरुरूचे महाभाग ! कर्मणा किं न संभवेत् । देहिनां किल संसारे दुःखमुग्रं तथा सुखम् ? ॥३०॥
अस्याः पूर्वभवः श्रेष्ठिन् ! श्रूयतां हृदि धार्यताम् । विचार्यतां त्वया सम्यक् कर्मणां रीतिरीदृशी ॥३१॥

धातकीखण्डमध्यस्थभरते पूर्वसंस्थिते । खेटकं नाम नगरमकरं जनसङ्कुलम् ॥३२॥
जिनदेवस्तत्र श्रेष्ठी श्रेष्ठः सकलसम्पदा । गेहिनी सुन्दरी तस्य रूपेणाप्यतिसुन्दरी ॥३३॥
सन्ति पुत्रास्तयोः पञ्च प्रथम आसपालकः । तेजःपालो द्वितीयस्तु तृतीयो गुणपालकः ॥३४॥
धर्मपालश्चतुर्थश्च धर्मसारश्च पञ्चमः । सन्ति पुत्र्यश्चतस्रश्च तयोरेता यथाक्रमम् ॥३५॥
आद्या लीलावती नाम्नी द्वितीया च शीलावती । रङ्गावती तृतीया च मङ्गावती तथा परा ॥३६॥
जिनदेवेन पञ्चापि तनयाः पण्डितान्तिके । विद्याकलादिग्रहणहेतवे स्थापिता मुदा ॥३७॥
चापल्यं कुर्वते नित्यं ते क्रीडन्ति परस्परम् । यत्तद् वदन्ति चोन्मत्ताः पठनं तन्वते नहि ॥३८॥
पण्डितोऽपि यदा तेषां शिक्षां यच्छति ते तदा । रुदन्तो गृहमागत्य मातुर्दुःखं न्यवेदयन् ॥३९॥
माता प्रोवाच हे वत्साः ! श्रूयतां पठितेन किम् । प्रयोजनं ? जनैर्यस्माज्जडानामुच्यते सुखम् ॥४०॥
पठितेनापि मर्त्तव्यं शठेनापि तथैव च । उभयोर्मरणं दृष्ट्वा कण्ठशोषं करोति कः ? ॥४१॥
पण्डितस्याप्युपालम्भं सा दत्ते दैवदूषिता । पुस्तिकां पट्टिकां चाग्नौ प्रज्वालयति रोषभृत् ॥४२॥
पठनार्थं न गन्तव्यं पुत्राणामिति शिक्षितम् । किमप्याख्याति चेद् विप्रो ग्राव्णाऽऽस्फालयस्तदा हि सः ॥४३॥
श्रेष्ठी व्यतिकरं पत्न्या ज्ञात्वा प्रोवाच तां प्रति । भद्रे ! जडानां पुत्राणां कः प्रदास्यति कन्यकाम् ? ॥४४॥

व्यवसाये करिष्यन्त्यमी कथं लेख्यकादिकम्। तथा सभायां विदुषां गमिष्यन्त्युपहास्यताम् ॥४५॥

यतः—

" माता शत्रुः पिता वैरी पुत्रा याभ्यां न पाठिताः। सभामध्ये न शोभन्ते हंसमध्ये बको यथा ॥ १ ॥
विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन। स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥ २ ॥ "

श्रुत्वेति श्रेष्ठिवचनं श्रेष्ठिन्युवाच तं जवात्। यूयं न किं पाठयत को हि दोषो ममात्र भोः!? ॥४६॥
तयैवं हक्कितः श्रेष्ठी ततो मौनं चकार सः। क्रमेण यौवनं प्रापुस्तनया रामणीयकम् ॥४७॥
निःशेषमूर्खमुख्यानां तेषामिभ्याङ्गजन्मनाम्। न कोऽपि दत्ते स्वां कन्यां प्रत्युतैवं वदन्ति च ॥४८॥
मूर्खनिर्धनदूरस्थशूरमोक्षाभिलाषिणाम्। त्रिगुणाधिकवर्षाणामेषां कन्या न दीयते ॥४९॥
श्रेष्ठ्यूचे कोऽपि पुत्राणां न ददाति स्वकन्यकाम्। मूर्खत्वादेव विवाहायोग्या एते खलु प्रिये! ॥५०॥
तवैते खलु दोषेण स्थिता मूर्खा यतस्त्वया। पट्टिका पुस्तिका दग्धा उपालब्धश्च पण्डितः ॥५१॥
मनागपि न मे दोषः श्रेष्ठिन्येवं बभाण सा। पित्रायत्ता यतः पुत्राः पुत्र्यो मात्रनुगाः स्मृताः ॥५२॥
ततः श्रेष्ठी जगौ रुष्टः पापिष्ठे! दुष्टचेष्टिते!। स्वयं दोषं विधायोच्चैर्भाषसे मम संमुखम् ॥५३॥
ततः प्रोवाच सा दुष्टा पापिष्ठो जनकस्तव। येनैवं मूढमतिना शिक्षितोऽसि नराधम! ॥५४॥

यतः—

" आः ! किं सुन्दरि ! सुन्दरं न कुरुपे ? ' ' किं नो करोपि स्वयम् ? '
' आपापे ! प्रतिजल्पसि प्रतिपदं ' ' पापस्त्वदीयः पिता ' ।
' धिक् त्वां क्रोधमुखीमलीकमुखरां ' ' त्वत्तोऽपि कः कोपनो ? '
दम्पत्योरितिनित्यदन्तकलहक्लेशार्त्तयोः किं सुखम् ? ॥ १ ॥ "

एतद्वचनमाकर्ण्य जिनदेवेन तत्क्षणम् । उपलेन क्रुधा जघ्ने शिरोमर्मणि सा मृता ॥५५॥
सा मृत्वा तव गेहिन्याः पुत्रीयं समजायत । ज्ञानस्याऽऽशातना पूर्वे भवे चक्रेऽनया रयात् ॥५६॥
रोगोत्पत्तिस्ततो जज्ञे पुत्र्यास्ते पूर्वकर्मणः । नाभुक्तं क्षीयते कर्म लौकिकैरपि गीयते ॥५७॥

" कृतकर्मक्षयो नास्ति कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥ १ ॥ "

निशम्यैतत् गुरोर्वाक्यं जातिस्मृत्या निजं भवम् । दृष्ट्वा मूर्च्छामगात् स्वस्थीभूता च गुणमञ्जरी ॥५८॥
सत्यमेतदिति प्रोचे सा गुरुं प्रति सादरा । अहो ! ज्ञानस्य माहात्म्यं निःसमानं जगत्त्रये ॥५९॥
श्रेष्ठिना च गुरुः पृष्टः कथ्यतां भगवन् ! मम । कथमस्याः प्रयास्यन्ति रोगाः सर्वेऽपि देहतः ॥६०॥
गुरुणाऽभाणि भोः श्रेष्ठिन् ! ज्ञानाऽऽराधनतः सुखम् । सर्वं संपद्यते जन्तोरसुखस्य निवर्त्तनम् ॥६१॥

विधिना शुक्लपञ्चम्यामुपवासो विधीयते । संस्थाप्य पुस्तिकां पट्टे स्वस्तिकः क्रियते पुरः ॥६२॥
पञ्चवर्त्तिमयो दीपः करणीयः फलानि च । ढौक्यन्ते पुरतः पञ्च भविकैर्भावपूर्वकम् ॥६३॥
पञ्च वर्षाणि पञ्चैव मासांश्च किल पञ्चमी । रीत्याऽनया समाराध्या त्रिधा शुद्ध्या मनीषिभिः ॥६४॥
मासे मासे न शक्नोति कर्तुं चेत् पञ्चमीतपः । यावज्जीवं तदाऽऽराध्या कार्त्तिके शुक्लपञ्चमी ॥६५॥
आराधिता यदात्येषा सौभाग्यं रूपमुत्तमम् । रोगनाशं धनं धान्यं पुत्रपौत्रादिसंपदम् ॥६६॥
बुद्धिप्रागल्भ्यमौन्नत्यं मत्यादिज्ञानपञ्चकम् । स्वर्गापवर्गसौख्यं च भक्तिभाजां हि जन्मिनाम् ॥६७॥ (युग्मम्)

यतः—

" इह पुत्थयाइं जे वत्थगंधकुसुमचएहिं । अचंति ढोअंति ताण पुरओ नेवज्जं दीवयं दिंति ॥ १ ॥
संत्तीइ कुणंति तवं ते हुंति विसुद्धबुद्धिसंपन्ना । सोहग्गाइगुणड्ढा सव्वण्णुपयं च पावंति ॥ २ ॥ "

इत्थं गुरुवचः श्रुत्वा सिंहदासोऽब्रवीदिदम् । भगवन् ! मे तनयायाः तपःशक्तिर्न विद्यते ॥६८॥
अतः कार्त्तिकपञ्चम्या विधिरादिश्यतां विभो ! । वाचं वाचंयमः प्रोचे ततः तद्धितकाम्यया ॥६९॥

१ इह पुस्तकानि ये वस्त्रगन्धकुसुमचयैः । अर्चन्ति ढौकन्ते तेषां पुरतो नैवेद्यं दीपकं ददति ॥ १ ॥

२ शक्त्या कुर्वन्ति तपस्ते भवन्ति विशुद्धबुद्धिसंपन्नाः । सौभाग्यादिगुणाऽऽढ्याः सर्वज्ञपदं च प्राप्नुवन्ति ॥ २ ॥

पट्टके पञ्चमीघस्त्रे पुस्तकं स्थापयेदथ । सुगन्धपुष्पैः संपूज्य धूपोत्क्षेपं करोति च ॥७०॥
पञ्चवर्णानि धान्यानि ढौकयन्ते पुरतस्तथा । पञ्चप्रकारपक्वान्नफलानां पञ्चकं परम् ॥७१॥
ततो गत्वा गुरोः पार्श्वे भक्त्याऽभिवन्द्य तत्पदौ। उपवासस्य तु प्रत्याख्यानं कुर्याद् यथाविधि ॥७२॥
तस्मिन् दिने नमो नाणस्सेति जप्यं पदं मुदा। सहस्रसंख्यया सम्यगुत्तराऽभिमुखेन च ॥७३॥
चेत् पौषधादिवैयग्र्यात् पञ्चम्यां नो विधिर्भवेत्। दिने पारणकस्यैवोद्यापनं क्रियते तदा ॥७४॥
साधर्मिकाणां वात्सल्यं यथाशक्त्या विधीयते। प्रतिनामाक्षमालानां प्रत्येकं पञ्चकं तथा ॥७५॥
तत् तपो गुणमञ्जर्या प्रतिपन्नं यथाविधि। सद्वैद्योक्तं वचः को वा जीवितेच्छुर्न मन्यते ? ॥७६॥
अस्मिन्नवसरे राज्ञा पृष्टः साधुपुरन्दरः । मत्सूनोर्वरदत्तस्य कुष्ठरोगोऽभवत् कथम् ? ॥७७॥
नाऽऽयाति पठनं किञ्चित् कुतस्तत्त्वं निवेदय । गुरुर्जगावस्य पूर्वभवं शृणु महीपते ! ॥७८॥
जम्बूद्वीपेऽत्र भरते पुरं श्रीपुरसंज्ञकम् । तत्र श्रेष्ठी वसुनामा वसति स्म महर्द्धिकः ॥७९॥
तस्य पुत्रो वसुसारो वसुदेवो द्वितीयकः । क्रीडार्थमेकदा तौ तु युवानौ जग्मतुर्वनम् ॥८०॥
एताभ्यां तत्र ददृशे सूरिः श्रीमुनिसुन्दरः। वन्दितश्च ततः सोऽदात् धर्मोपदेशमेतयोः ॥८१॥
यथा—

"यत् प्रातस्तन्न मध्याह्ने यन्मध्याह्ने न तन्निशि। निरीक्ष्यते भवेस्मिन् ही ! पदार्थानामनित्यता ॥ १ ॥
न गुह्यरक्षणे दक्षं न दंशमशकापहम् । शुनः पुच्छमिव व्यर्थं मानुष्यं धर्मवर्जितम् ॥ २ ॥
यत् प्रातः संस्कृतं धान्यं मध्याह्ने तद् विनश्यति । तदीयरसनिष्पन्ने काये का नाम सारता ? ॥ ३ ॥"

इत्यादिदेशनां श्रुत्वा तातमापृच्छय तावुभौ । व्रतं जगृहतुः सूरेरन्तिके विजितेन्द्रियौ ॥८२॥
लघुना वसुदेवेन चारित्रं चारु बिभ्रता । सिद्धान्तसागरः सर्वोऽवगाहि बुद्धिशालिना ॥८३॥
गुरुणा वसुदेवाय ददे सूरिपदं क्रमात् । गुणिनो हि जना विश्वे के न स्युर्गौरवाऽऽस्पदम् ? ॥८४॥
सहस्रार्धमितानां हि साधूनां वाचनां सदा । प्रदत्ते वसुदेवोऽपि श्रुतसागरपारगः ॥८५॥
संस्तारकेऽन्यदा सुप्तं सूरिं कोऽपि तपोधनः । पर्यपृच्छदागमार्थं व्याख्याति स्म गुरुर्द्रुतम् ॥८६॥
तस्मिन् गते मुनौ स्थानं द्वितीयेऽपि तथाऽऽगते । एवमन्येषु भूयस्सु पृष्ट्वा पृष्ट्वा गतेषु च ॥८७॥
किञ्चिन्निद्रायमाणः सन् पृष्टः केनापि साधुना । पदमग्रेतनं वाच्यं पदार्थोऽपि प्रसाद्यताम् ॥८८॥
स सूरिश्चिन्तयामास कुविकल्पैर्निजे हृदि । कृतपुण्यो मम भ्राता वृद्धः शेते स्वयं सुखम् ॥८९॥
मूर्खत्वादस्य पार्श्वे तु प्रष्टुं नाऽऽयाति कोऽप्यतः । स्वैरं भुङ्क्ते भाषते च समाधिं वेत्ति चेतसा ॥९०॥
यदीदृक्षं हि मूर्खत्वं जातुचिज्जायते मम । तदाऽतिसुन्दरं यस्मान्मूर्खत्वे बहवो गुणाः ॥९१॥

यतः—

"मूर्खत्वं हि सखे ! ममापि रुचितं तस्मिन् यदष्टौ गुणा
निश्चिन्तो बहुभोजनोऽत्रपमना नक्तं दिवा शायकः ।
कार्याकार्यविचारणाऽन्धबधिरो मानेऽपमाने समः
प्रायेणाऽऽमयवर्जितो दृढवपुर्मूर्खः सुखं जीवति ॥ १ ॥"

कथयिष्ये न कस्यापि पदमात्रमतः परम् । प्राक्तनं विस्मरिष्यामि पठिष्यामि नवं नहि ॥९२॥
ततो द्वादश दिवसान् मौनमेव चकार सः । पापं च तदनालोच्य रौद्रध्यानपरो मृतः ॥९३॥
सोऽयं तवाङ्गजो जज्ञे पूर्वोपार्जितकर्मणा । अतीवमूर्खः कुष्ठादिरोगाऽऽक्रान्ततनुर्नृप ! ॥९४॥
आचार्यस्य बृहद्भ्राता मृत्वा सरसि मानसे । मरालबालः संजातो विचित्रा कर्मणां गतिः ॥९५॥
गुरुवाक्यमिति श्रुत्वा जातिस्मृत्या निजं भवम् । दृष्ट्वा मूर्छामगात् स्वस्थीभूतश्च स क्षणान्तरे ॥९६॥
जगाविदं वरदत्तः सत्यं भागवतं वचः । अहो ! श्रीमद्गुरोर्ज्ञानं विश्वविश्वप्रकाशकम् ॥९७॥
नृपो बभाण भगवन्नस्य देहगदाः कथम् । व्रजिष्यन्ति भविष्यन्ति कदाऽस्माकं समाधयः ? ॥९८॥
कारुण्यैकमहाम्भोधिरूचेऽनूचानपुङ्गवः । तपःप्रभावतो रोगा यान्त्यायान्ति च सम्पदः ॥९९॥

यतः—

यद् दूरं यद् दुराराध्यं यच्च दूरे व्यवस्थितम् । तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ॥ १ ॥

अगृणाद् गुरुरप्येवं कार्त्तिके शुक्लपञ्चमी । यावज्जीवं समाराध्या भवता विधिपूर्वकम् ॥१००॥
अवदद् वरदत्तो मे तपःशक्तिर्न विद्यते । मद्योग्यं तत् तपः स्तोकं किञ्चिदादिश्यतां विभो ! ॥१०१॥
गुर्वादितः समग्रोऽपि विधिस्तस्य पुरः परः । निवेदितः श्रीगुरुणा करुणाञ्चितचेतसा ॥१०२॥
प्रतिपन्नं कुमारेण विधिवत् पञ्चमीतपः । राज्ञा च नृपराज्ञीभिर्लोकैरन्यैश्च भावतः ॥१०३॥
गुरुं प्रणम्य सर्वेऽपि स्थानं जग्मुर्निजं निजम् । तत् तपो विधिवच्चक्रू राजाऽऽद्याः सकला अपि ॥१०४॥
तत् तपोऽनुत्तरं सम्यग् वरदत्तस्य कुर्वतः । सर्वेऽपि रोगा विलयं जग्मुः क्षुद्रा इव क्रमात् ॥१०५॥
स्वयंवरं समेतानां वरभूपसुतामथ । सहस्रसङ्ख्यया कन्योत्तमानां समहोत्सवम् ॥१०६॥
चकार पाणिग्रहणं शिक्षिताशेषसत्कलः । वरदत्तो दत्तोत्तमहर्षोत्कर्षः प्रहृष्टहृत् ॥१०७॥ (युग्मम्)
अन्यदा वरदत्तस्य दत्त्वा राज्यं नृपोऽग्रहीत् । परलोकाध्वपाथेयं चारित्रं गुरुसन्निधौ ॥१०८॥
वरदत्तो निजं राज्यं चिरकालं प्रपालयन् । वर्षे वर्षे महाशक्त्या पञ्चम्या विदधे विधिम् ॥१०९॥
अखण्डाऽऽज्ञो महीनेता विनेता सकलद्विषाम् । भुक्तभोगोऽग्रहीद् दीक्षां दत्त्वा राज्यं स्वसूनवे ॥११०॥

इतश्च गुणमञ्जर्या माहात्म्यात् तपसः क्रमात्। दूरं गता महारोगा अभवद् रूपमद्भुतम् ॥१११॥
सा तदा जिनचन्द्रेण परिणीता महामहैः । करमोचनवेलायां पित्रा बहु धनं ददे ॥११२॥
गृहसौख्यं चिरं भुक्त्वा तत् कृत्वा विधिना तपः। कक्षीचकार सा दीक्षां प्रान्तेऽधिकफलार्थिनी ॥११३॥
चारित्रं निरतीचारं तावाराध्य जिनोदितम्। कालं कृत्वा समुत्पन्नौ वैजयन्ते सुरोत्तमौ ॥११४॥
इतश्च जम्बूद्वीपस्यविदेहे सुखसद्मनि । विजये पुष्कलावत्यां नगरी पुण्डरीकिणी ॥११५॥
तस्याममरसेनोऽभूद् राजा राजगुणान्वितः । द्विधा गुणवती तस्य पत्नी पतिप्रमोददा ॥११६॥
वरदत्तस्य जीवोऽथ ततश्च्युत्वाऽऽयुषः क्षये। तस्याः कुक्षौ समुत्पन्नो मुक्ता शुक्ताविव ध्रुवम् ॥११७॥
क्रमेण सुषुवे सूनुमनूनगुणलक्षणम् । शूरसेन इति तस्य पित्रा नाम विनिर्ममे ॥११८॥
स पाल्यमानो यत्नेन क्रमाद् द्वादशवार्षिकः । रूपलावण्यविज्ञानमन्दिरं समजायत ॥११९॥
उपयेमे स कन्यानां शतमेकं नृपाऽऽज्ञया। दत्त्वा राज्यं निजं तस्मै परलोकमगात् पिता ॥१२०॥
श्रीमत्सीमन्धरः स्वाम्यन्यदा तत्र समाययौ । भव्याम्भोरुहसंदोहविभासनदिवाकरः ॥१२१॥
अर्हदागमनं श्रुत्वा गत्वा नत्वा प्रभुं नृपः। उपाविशत्, जिनोऽप्याख्यद् देशनां क्लेशनाशिनीम् ॥१२२॥
भव्याः! सौभाग्यपञ्चम्याराधनं क्रियतां तथा । यथा हि वरदत्तेन विहितं तद् यथाविधि ॥१२३॥

निशम्य तद्वचः प्रोचे राजा श्रीजगदीश्वरम् । कोऽयं हि वरदत्ताऽऽख्यो यो भवद्भिरुदीरितः ? ॥१२४॥
ततः सर्वोऽपि वृत्तान्तः प्रभुणा प्रतिपादितः । माहात्म्यं ज्ञानपञ्चम्याः सविशेषं जिनो जगौ ॥१२५॥
अर्हद्वचनमाकर्ण्य प्रपन्ना पञ्चमी जनैः । भूपोऽपि प्रतिबुद्धाऽऽत्मोत्थाय नत्वा गृहं ययौ ॥१२६॥
वर्षाणां दशसहस्रीं राज्ये स्थित्वाऽङ्गजन्मने । दत्त्वा राज्यं नृपस्तीर्थङ्करपार्श्वेऽग्रहीद् व्रतम् ॥ ॥१२७॥
एकवर्षसहस्रं तु राजर्षिश्चरणं दधत् । उत्पाद्य केवलज्ञानं मोक्षमाप सुखाऽऽस्पदम् ॥१२८॥
विजयरमणीयाऽऽख्ये जम्बूद्वीपस्थिते शुभा । नगरी विश्रुता तत्रामरसिंहाभिधो नृपः ॥१२९॥
भार्याऽमरावती तस्य सच्छीलादिविभूषणा । जीवोऽथ गुणमञ्जर्यास्तस्याः कुक्षाववातरत् ॥१३०॥
समये तनयो जज्ञे पित्रा नाम विनिर्ममे । सुग्रीव इति रूपादिगुणश्रेणिविराजितः ॥१३१॥
प्रदाय विंशतितमवर्षे राज्यं स्वसूनवे । दीक्षया परलोकं स्वं साधयामास भूपतिः ॥१३२॥
बह्वीनां तेन कन्यानामकारि करपीडनम् । चतुरशीतिसहस्राः पुत्रास्तस्य च जज्ञिरे ॥१३३॥
वितीर्य राज्यं पुत्रेभ्यस्तपस्यां प्रतिपन्नवान् । स प्राप्य केवलज्ञानं भव्यजीवानबोधयत् ॥१३४॥
पूर्वलक्षं स राजर्षिरासेव्य चरणं परम् । सर्वकर्मक्षयं कृत्वा जगाम परमं पदम् ॥१३५॥
जायतेऽधिकसौभाग्यं पञ्चम्याराधनात् नृणाम् । इत्यस्या अभिधा जज्ञे लोके सौभाग्यपञ्चमी ॥१३६॥

एवं विभाव्य भो भव्याः ! पञ्चम्याराधनोद्यमः । भवभीतिविभेदाय कार्यो भवद्भिरद्भुतः ॥१३७॥
श्रीमत्तपगणगगनाङ्गणदिनमणिविजयसेनसूरीणाम् । शिष्याणुना कथेयं विनिर्मिता कनककुशलेन ॥१३८॥
बुधपद्मविजयगणिभिः प्रवरैर्भीमादिविजयगणिभिश्च । संशोधिता कथेयं भूतेषुरसेन्दुमितवर्षे [१६५५] ॥१३९॥
गणिविजयसुन्दराणामभ्यर्थनया कृता कथा मयका । प्रथमाऽऽदर्शो लिखिता तैरेव च मेडतानगरे ॥१४०॥

इति कार्त्तिकसौभाग्यपञ्चमीमाहात्म्यविषये वरदत्तगुणमञ्जरीकथानकं सम्पूर्णम् ॥



# श्रीमौनैकादशीमाहात्म्यम् ।

### ३ उत्तराध्ययनसूत्र–( सटीक. भाग ४. )

कमलसंयमी संस्कृत टीका साथे प्रस्तुत आगमग्रंथ इतिहासप्रेमी विद्वान् मुनिराज श्रीजयन्तविजयजी महाराजे सुन्दर रीते एडिट कर्यो छे. आ कमलसंयमी टीका घणी सहेली अने सुन्दर छे. आमां प्राचीन कथाओनो संग्रह पण सारो छे. व्याख्यान–उपदेश माटे उपयोगी छे.

प्रत्येक भागनुं मूल्य साडा त्रण रुपिया ।

### ४ धर्मवियोगमाला–( काव्य )

अनेक छन्दो अने अलंकारोथी युक्त संस्कृतादि सात भाषाओमां न्यायकाव्यतीर्थ मुनिश्री हिमांशुविजयजीए प्रस्तुत खण्डकाव्यनी रचना करी छे. मूल्य बे आना ।

### ५ सुभाषितपद्यरत्नाकर–( चार भाग )

हिन्दु, जैन अने बौद्धसाहित्यमांथी भिन्न भिन्न धार्मिक अने व्यवहारिक सेंकडो विषयोनां पद्योने संग्रही मुनिराजश्री विशालविजयजी महाराजे गुजराती भाषान्तर साथे प्रस्तुत ग्रंथ तैयार कर्यो छे. जे जे ग्रंथोमांथी पद्यो लीधां छे, तेनां नाम सहित स्थलनिर्देश पण कर्यों छे. जैन–जैनेतर दरेक उपदेशकने आ ग्रंथ घणो उपयोगी थई पडे तेम छे. प्रत्येक भागमां लगभग चारसो पेज तथा एक हजार श्लोको छे. त्रण भाग बहार पडी चुक्या छे. दरेक भागनुं मूल्य सवा रुपीयो छे.

: —श्रीविजयधर्मसूरि जैनग्रंथमाला छोटासराफा–उजैन ( मालवा )

अर्हम् ।

विबुधश्रीरविसागरविरचितं ।

# श्रीमौनैकादशीमाहात्म्यम् ।

प्रणम्य वृषभं देवं वृषभाङ्कसमन्वितम् । श्रीशान्तिं नेमिनाथं च श्रीपार्श्वं वीरपारगम् ॥ १ ॥
यत्र स्तोकमपि श्रेयः कृतं बहुफलं भवेत् । माहात्म्यं सुखदं वक्ष्ये श्रीमौनैकादशीतिथेः ॥ २ ॥ (युग्मम्)
जम्बूद्वीपाऽऽह्वये द्वीपे क्षेत्रे च भरताभिधे । सुराष्ट्रशिष्टदेशोऽस्ति क्लेशशोकविनाशकः ॥ ३ ॥
यत्र शत्रुञ्जयं तीर्थं गिरिनाराभिधं तथा । अपराण्यपि तीर्थानि सन्ति शान्तिकराणि च ॥ ४ ॥
अलका नगरी किंवा रावणस्याथवा पुरी ? । प्रत्यक्षं वीक्ष्य यां लोका इति संशयमादधुः ॥ ५ ॥
वीतशोकाश्च यल्लोकाः सुरलोकाऽऽकारधारिणः । देवा इव विराजन्ते चित्रशीलव्रताऽऽकराः ॥ ६ ॥
द्वादशयोजनाऽऽयामा नवयोजनविस्तृता । देवलोकोपमानश्रीस्तत्रास्ति द्वारिकापुरी ॥७॥ ( विशेषकम् )
पुष्पदन्ताविवोद्द्योतकारकौ ध्वान्तवारकौ । तत्र राज्यं प्रकुर्वाते बलदेवनरायणौ ॥ ८ ॥

अष्टादशसहस्रैश्च क्रियापात्रैस्तपोधनैः । चत्वारिंशत्सहस्रीभिर्व्रतिनीभिः समन्वितः ॥ ९ ॥
विहरन्नेकदा श्रीमान् नेमिनाथो जिनेश्वरः । लोकानां भाग्ययोगेन तत्रैव समवासरत् ॥१०॥ (युग्मम्)
वन्दितुं भगवन्तं तं प्रमोदपुलकाङ्किताः । जग्मुः प्रद्युम्नशाम्बाऽऽद्या अपरेऽपि च यादवाः ॥११॥
तत्र केचिद् गजाऽऽरूढा हयाऽऽरूढाश्च केचन । रथाऽऽरूढास्तथा केचित् केचिच्चरणचारिणः ॥१२॥
सेनया चतुरङ्गिण्या नारायणोऽपि वन्दितुम् । बलभद्रेण च स्वान्तःपुरेण सहितो ययौ ॥१३॥
अर्हत्समवसरणं विलोक्य विनयाय सः । पञ्चापि राजचिह्नान्यमुचत् खड्गादिकानि च ॥१४॥
स त्रिः प्रदक्षिणीकृत्य विनयाऽऽनतमस्तकः । पञ्चाङ्गप्रणिपातेन नत्वा तस्थौ यथोचितम् ॥१५॥
तदा श्रीनेमिनाथेन सुधामधुरया गिरा । प्राऽऽरेभे विगताऽऽरम्भा देशना क्लेशनाशिनी ॥१६॥
जीवेन भ्रमताऽनेन संसारापारसागरे । क्वापि सम्यक्त्वमाणिक्यं चिन्तारत्नमवापि न ॥१७॥
चारित्रपालने शक्तिर्न स्याद् यस्य शरीरिणः । कदाचित् तेन तद् मुक्तं भ्रष्टो वाच्यस्तथाऽपि न ॥१८॥
यो भवेद् दर्शनाद् भ्रष्टः स भ्रष्टः प्रतिपद्यते । सिध्येत् चारित्रहीनोऽपि, दर्शनेन विना नहि ॥१९॥
सम्यक्त्वं पञ्चधोक्तं तत् सास्वादनाऽऽख्यवेदके । क्षायोपशमिकं चौपशमिकं क्षायिकं तथा ॥२०॥
तत्र यत् क्षायिकं प्रोक्तं तत् सप्तकक्षयेण च । मानमायाकुधलोभा एतेऽनन्तानुबन्धिनः ॥२१॥

सम्यक्त्वमिश्रमिथ्यात्वमोहनीयक्षयेण च। भवेत् क्षायिकसम्यक्त्वमतीचारविवर्जितम् ॥२२॥ (युग्मम्)
तत् सम्यक्त्वं त्वया प्राप्तमस्ति स्वस्तिविधायकम्। समाराध्यं विशेषेण कृष्ण! कल्याणहेतवे ॥२३॥
इत्युक्ते जिननाथेन प्राऽऽह कृष्णः कृताञ्जलिः। विषयादिप्रसक्तस्य का गतिर्मे भविष्यति? ॥२४॥
केशवं भगवानूचे घोरकर्मकृतामपि। धर्मकर्मप्रभावेण मुक्तिर्जाताऽस्ति भूयसाम् ॥२५॥
कृष्णोऽवक् किमहं कुर्वे? राज्यकार्यकृतो मम। दानशीलतपोभावव्रतशक्तिर्न तादृशी ॥२६॥
ततश्च त्रिषष्ट्यधिकशतेषु दिवसेष्वपि। ममैकं वासरं सारं कृपां कृत्वा निवेदय ॥२७॥
जिनः प्रोवाच यद्येवं तद् मौनैकादशीतिथिम्। त्वमाराधय भावेन कल्याणसुखसम्पदे ॥२८॥
अपि मिथ्यादृशां मान्या सा मौन्येकादशी तिथिः।मार्गशीर्षाऽऽख्यमासस्य शुक्लपक्षे प्रकीर्त्तिता ॥२९॥
तत्र पुण्यं कृतं स्वल्पमपि प्रौढफलं भवेत्। तस्मादाराधनीया सा विशेषेण विशारदैः ॥३०॥
*श्रीमल्लिजन्मव्रतकेवलानि तथा नमिज्ञानमरव्रतं च।
यस्यामजायन्त समाः सहस्राः सैकादशी स्यात् नहि कस्य शस्या? ॥ ३१ ॥
पञ्चस्वपि भरतेषु पञ्चस्वैरवतेष्वपि। सन्ति तीर्थकृतां पञ्च पञ्च कल्याणकानि च ॥ ३२ ॥

* इदं पद्यं प्रत्यन्तरेषु नास्ति।

मीलनात्। कल्याणकानि पञ्चाशत् तीर्थकृन्नामसम्भवात् ॥ ३३ ॥
अतीतानागतवर्तमानकालप्रभेदतः। सञ्जायन्तेऽर्हतां सार्द्धं शतकल्याणकानि च ॥ ३४ ॥
कल्पवृक्षोऽस्ति वृक्षेषु नृपचक्रेषु चक्रभृत्। देवतासु यथा लक्ष्मीः स्वर्नदी च नदीष्वपि ॥ ३५ ॥
सर्वेभ्योऽपि च पर्वभ्यो पर्व पर्युषणाऽऽह्वयम्। दिनेभ्योऽप्यखिलेभ्योऽयं तथा मुख्योऽस्ति वासरः ॥३६॥ (युग्मम्)
श्रमणैः श्रमणीभिश्च श्रावकैः श्राविकादिभिः। धर्मकर्म विधातव्यमस्मिन् दिने विशेषतः ॥ ३७ ॥
कार्यं संसारकार्येषु मौनं संज्ञाऽऽदिवर्जितम्। आदेशमार्गणाधीतिजल्पने नहि दूषणम् ॥ ३८ ॥
कृष्णः पुनरपि प्रोचे योऽयं निगदितो दिनः। वासरेष्वपि सर्वेषु श्रेष्ठः पुण्यप्रभावकः ॥ ३९ ॥
श्रीमद्भिरेव किं तस्य महिमा मन्यते महान्। केनाप्याराधितः पूर्वमस्त्यसौ दिवसो विभो!? ॥ ४० ॥
जिनो जगाद गोविन्द! सुव्रतश्रेष्ठिनोऽत्र हि। दृष्टान्तः कथितः स्पष्टं विशिष्टैः परमेष्ठिभिः ॥ ४१ ॥
तद् यथा धातकीखण्डे पृथ्वीक्षूकारभूधरात्। अस्ति दक्षिणदिग्भागे विजयं नाम पत्तनम् ॥ ४२ ॥
यत्र आबालगोपालप्रतीतं प्रदधत् स्फुटम्। तत्राभूत् पृथिवीपालः पृथिवीपालनक्षमः ॥ ४३ ॥
औदार्यवर्यचातुर्यशीलादिगुणशालिनी। तस्य चन्द्रवती कान्ता चन्द्रवन्मुखसौम्यभाक् ॥ ४४ ॥
तत्रैव व्यवहारेण श्रेष्ठी व्यवहरन् महान्। सूरः सूरसमो जातो व्यवहारिशिरोमणिः ॥ ४५ ॥

रत्नराशिर्न मीयेत पारावारस्थितो यथा । तथैव तस्य केनापि धनं मातुं न शक्यत ॥ ४६ ॥
कस्यचित् स्याद् धनं भूयः प्रायो न कस्यचित् सुतः । तस्य धर्मप्रभावेण महीयांसावुभावपि ॥ ४७ ॥
लोकेऽप्यामन्त्रणीयोऽयं सर्वकार्येषु सर्वदा । केनापि परिभूतो न बहुदासचतुष्पदः ॥ ४८ ॥
सोऽन्यदा रजनीशेषे निद्राच्छेदे व्यचिन्तयत् । ऋद्धिरेतावती लब्धा मया पुण्यप्रभावतः ॥ ४९ ॥
ततः कुर्वे यथाशक्ति धर्मकर्मेति चिन्तयन् । प्रातः प्राज्यपरीवारो जगाम वन्दितुं गुरुम् ॥ ५० ॥
वन्दित्वा देशनां, श्रुत्वा गेहं गन्तुमना असौ । गुरुं विज्ञपयामास चिकीर्षुर्धर्ममुत्तमम् ॥ ५१ ॥
स्वामिन्नहर्निशं धर्मं कर्तुं सदा न शक्यते । सकलस्यापि वर्षस्य मध्ये चैकं दिनं वद ॥ ५२ ॥
एकस्मिन्नेव यस्मिंश्च दिने पुण्यं विनिर्मितम् । महाफलं प्रजायेत निर्वाणपदसाधकम् ॥ ५३ ॥
जगदे गुरुभिः स्वर्गापवर्गमार्गदर्शिभिः । समाराधय तां मार्गशीर्षस्यैकादशीं तिथिम् ॥ ५४ ॥
तस्यां चतुर्विधाऽऽहारप्रत्याख्यानविधानतः । उपवासो विधातव्योऽहोरात्रं पौषधग्रहात् ॥ ५५ ॥
एवं क्रमेण साऽऽराध्या मासेष्वेकादशस्वपि । सर्वत्र तत्र कर्तव्यो मौनोपवासपौषधः ॥ ५६ ॥
यदा कार्तिकमासस्य धवलैकादशीदिनम् । समागच्छति तत्रापि विधेयं पूर्ववत् तपः ॥ ५७ ॥
पारणादिवसे चैकादशैकादशसङ्ख्यया । ढौकनं श्रीफलादीनां पृथक् पृथग् विधीयते ॥ ५८ ॥

पर्वं दशस्वपि क्षेत्रेष्वेकत्र किल मीलनात्। कल्याणकानि पञ्चाशत् तीर्थकृन्नामसम्भवात् ॥ ३३ ॥
अतीतानागतवर्त्तमानकालप्रभेदतः । सञ्जायन्तेऽर्हतां सार्द्धं शतकल्याणकानि च ॥ ३४ ॥
कल्पवृक्षोऽस्ति वृक्षेषु नृपचक्रेषु चक्रभृत्। देवतासु यथा लक्ष्मीः स्वर्नदी च नदीष्वपि ॥ ३५ ॥
सर्वेभ्योऽपि च पर्वभ्यो पर्व पर्युषणाऽऽह्वयम्। दिनेभ्योऽप्यखिलेभ्योऽयं तथा मुख्योऽस्ति वासरः ॥३६॥ (युग्मम्)
श्रमणैः श्रमणीभिश्च श्रावकैः श्राविकादिभिः। धर्मकर्म विधातव्यमस्मिन् दिने विशेषतः ॥ ३७ ॥
कार्यं संसारकार्येषु मौनं संज्ञाऽऽदिवर्जितम्। आदेशमार्गणाधीतिजल्पने नहि दूषणम् ॥ ३८ ॥
कृष्णः पुनरपि प्रोचे योऽयं निगदितो दिनः। वासरेष्वपि सर्वेषु श्रेष्ठः पुण्यप्रभावकः ॥ ३९ ॥
श्रीमद्भिरेव किं तस्य महिमा मन्यते महान्। केनाप्याराधितः पूर्वमस्त्यसौ दिवसो विभो!? ॥ ४० ॥
जिनो जगाद गोविन्द! सुव्रतश्रेष्ठिनोऽत्र हि। दृष्टान्तः कथितः स्पष्टं विशिष्टैः परमेष्ठिभिः ॥ ४१ ॥
तद् यथा धातकीखण्डे पृथ्वीक्षूकारभूधरात्। अस्ति दक्षिणदिग्भागे विजयं नाम पत्तनम् ॥ ४२ ॥
यश आबालगोपालप्रतीतं प्रदधत् स्फुटम्। तत्राभूत् पृथिवीपालः पृथिवीपालनक्षमः ॥ ४३ ॥
औदार्य्यवर्य्यचातुर्य्यशीलादिगुणशालिनी। तस्य चन्द्रवती कान्ता चन्द्रवन्मुखसौम्यभाक् ॥ ४४ ॥
तत्रैव व्यवहारेण श्रेष्ठी व्यवहरन् महान्। सूरः सूरसमो जातो व्यवहारिशिरोमणिः ॥ ४५ ॥

रत्नराशिर्न मीयेत पारावारस्थितो यथा । तथैव तस्य केनापि धनं मातुं न शक्यत ॥ ४६ ॥
कस्यचित् स्याद् धनं भूयः प्रायो न कस्यचित् सुतः । तस्य धर्मप्रभावेण महीयांसावुभावपि ॥ ४७ ॥
लोकेऽप्यामन्त्रणीयोऽयं सर्वकार्येषु सर्वदा । केनापि परिभूतो न बहुदासचतुष्पदः ॥ ४८ ॥
सोऽन्यदा रजनीशेषे निद्राच्छेदे व्यचिन्तयत् । ऋद्धिरेतावती लब्धा मया पुण्यप्रभावतः ॥ ४९ ॥
ततः कुर्वे यथाशक्ति धर्मकर्मेति चिन्तयन् । प्रातः प्राज्यपरीवारो जगाम वन्दितुं गुरुम् ॥ ५० ॥
वन्दित्वा देशनां, श्रुत्वा गेहं गन्तुमना असौ । गुरुं विज्ञपयामास चिकीर्षुर्धर्ममुत्तमम् ॥ ५१ ॥
स्वामिन्नहर्निशं धर्मं कर्तुं सदा न शक्यते । सकलस्यापि वर्षस्य मध्ये चैकं दिनं वद ॥ ५२ ॥
एकस्मिन्नेव यस्मिंश्च दिने पुण्यं विनिर्मितम् । महाफलं प्रजायेत निर्वाणपदसाधकम् ॥ ५३ ॥
जगदे गुरुभिः स्वर्गापवर्गमार्गदर्शिभिः । समाराधय तां मार्गशीर्षस्यैकादशीं तिथिम् ॥ ५४ ॥
तस्यां चतुर्विधाऽऽहारप्रत्याख्यानविधानतः । उपवासो विधातव्योऽहोरात्रं पौषधग्रहात् ॥ ५५ ॥
एवं क्रमेण साऽऽराध्या मासेष्वेकादशस्वपि । सर्वत्र तत्र कर्तव्यो मौनोपवासपौषधः ॥ ५६ ॥
यदा कार्त्तिकमासस्य धवलैकादशीदिनम् । समागच्छति तत्रापि विधेयं पूर्ववत् तपः ॥ ५७ ॥
पारणादिवसे चैकादशैकादशसङ्ख्यया । ढौकनं श्रीफलादीनां पृथक् पृथग् विधीयते ॥ ५८ ॥

अथोद्यापनदिवसात् तस्य पञ्चदशे दिने । सहसा शूलमुत्पन्नमुदरेऽतिदुरासहम्* ॥ ५९ ॥
तेन शूलेन पञ्चत्वं सम्प्राप्य स सुराऽऽलये । एकादशे समुत्पेदे एकविंशाब्धिजीविते ॥ ६० ॥
कमनीयानि शर्माणि तत्र भुक्तानि भूरिशः । मन्ये मनुष्यसौख्यानि भोक्तुमेष च्युतस्ततः ॥ ६१ ॥
भव्यानामास्पदं भव्यं भृग्यते पूर्वपुण्यतः । इति सौर्यपुरे श्रेष्ठिसमृद्धिदत्त ऋद्धिभाक् ॥ ६२ ॥
तस्य प्रीतिमती कान्ता पत्यौ प्रीतिमती सती । एष लावण्यधारिण्यास्तस्याः कुक्षाववातरत् ॥ ६३ ॥
नवमासेऽथ सम्पूर्णे तया सूतः सुतो मतः । प्राज्यान् जन्मोत्सवांस्तस्य पितरौ चक्रतुस्तमाम् ॥ ६४ ॥
तस्य भूखनने नालप्रक्षेपार्थमनर्थहृत् । निधानं प्रकटीभूतं प्रभूतं तोषदायकम् ॥ ६५ ॥
क्षीराङ्कमण्डनक्रीडाधावनादिककर्मणि । दक्षाभिः पञ्चधात्रीभिर्लाल्यमानोऽयमेधत ॥ ६६ ॥
व्रताऽऽराधनतोऽप्यग्रे सुव्रतोऽसौ भविष्यति । पितृभ्यामिति मत्वैवं दत्तं सुव्रतनामकम् ॥ ६७ ॥
अनुक्रमेण सञ्जातो यदाऽयमष्टहायनः । तं सौभाग्यनिधिं वीक्ष्य जनकेनेति चिन्तितम् ॥ ६८ ॥
रूपलावण्यसंयुक्ता नरा जात्यादिसम्भवाः । विद्याहीना न राजन्ते ततोऽमुं पाठयाम्यहम् ॥६९॥ (युग्मम्)
चिन्तयित्वेत्युपाध्यायसमीपे पितरौ महैः । द्वासप्ततिकलाऽभ्यासं कर्तुं मुमुचतुश्च तम् ॥ ७० ॥
पाठितानेकशिष्यस्य गुरोरायासवर्जनात् । अधीतविस्मृतिस्मृत्यभ्यासवत् सोऽप्यधात् कलाः ॥ ७१ ॥

कामिनीपाशशङ्कायां गतत्रासं परं भुवि । प्राप्तः प्रवर्द्धमानः स यौवनं पावनं ततः ॥ ७२ ॥
×यस्य द्रव्यं भवेत् तस्य कन्याप्राप्तिर्न दुर्लभा । पित्रैकादशकन्यानां कारितं पाणिपीडनम् ॥ ७३ ॥
श्रीकान्ता पद्मलक्ष्मीश्च गङ्गा पद्मलताऽपि च । तारा शुद्धिश्रिया युक्ता रम्भा वर्णश्रिया युता ॥ ७४ ॥
पद्मा गौरी च गाङ्गेया इति नामानि तत्स्त्रियाः । पुत्रः समृद्धिदत्तेन स्थापितो गृहकर्मसु ॥७५॥ (युग्मम्)
ताभिर्लावण्यनैपुण्यपुण्यपुण्याभिरूचकैः । भोगाऽऽभोगान् स भुञ्जानो दोगुन्दक इवाभवत् ॥ ७६ ॥
एतेन पूर्वजन्मन्येकादश्याराधिता यतः । तत एकादशस्वर्णकोटीनां नायकोऽभवत् ॥ ७७ ॥
सोऽन्येद्युः श्रीगुरूणां च चरणाम्भोजयामलम् । महाऽऽनन्दाभिलापेण नन्तुं परिवृतो गतः ॥ ७८ ॥
श्रीगुरून् ज्ञानविज्ञानहृद्यविद्यासमन्वितान् । स्थितो नत्वोचितस्थानं शुश्राव शान्तदेशनाम् ॥ ७९ ॥
देशनायां तदा तत्र द्वितीयादिमहातिथेः । विचारः कथ्यमानोऽभूत् सर्वसावद्यवर्जनात् ॥ ८० ॥
आराधनं द्वितीयाया जन्यते येन धीमता । साधुश्रावकयोस्तेन धर्म आराधितो भृशम् ॥ ८१ ॥
मतिश्रुतावधिज्ञानमनःपर्यायसंज्ञकम् । पञ्चमं केवलज्ञानमुपयोगविनाकृतम् ॥ ८२ ॥
उपवासादिनिर्मित्याऽऽराध्यते येन पञ्चमी । तस्य ज्ञानानि चत्वारि सुलभान्यनुकेवलम् ॥ ८३ ॥

× सुव्रतपत्नीनामोल्लेखाऽऽत्मकं पद्ययुग्मं 'क' 'ख' पुस्तकद्वये न दृश्यते ।

कुव्यापारनिषेधेनाऽऽराधयेद् योऽष्टमीदिनम् । तस्याचिरेण कालेन कर्माष्टकक्षयो भवेत् ॥ ८४ ॥
ब्रह्मचर्यादियुक्तो यः करोत्येकादशीतपः । तेन त्वेकादशाङ्गानामाराधनं विनिर्मितम् ॥ ८५ ॥
यः पौषधोपवासाभ्यामाराधयेच्चतुर्दशीम् । *सचतुर्दशपूर्वाणां स समाराधको भवेत् ॥ ८६ ॥

यदुक्तमागमे—

"[1]बीआपञ्चमिअट्ठमिएकादसिचउद्दसी पण तिहिओ। एआओ सुहतिहिओ गोयमगणहारिणा भणिआ ॥ १ ॥
[2]बीआ दुविहे धम्मे, पञ्चमी नाणे अ, अट्ठ कम्मे अ। एगारसी अङ्गाणं, चउद्दसी चउदपुव्वाणं ॥ २ ॥"

अष्टमी कर्मघाताय, सिद्धिलाभा चतुर्दशी । पञ्चमी केवलज्ञानं तस्मात् त्रितयमाचरेत् ॥ ८७ ॥
द्वितीयादितिथीनां च विचार इति सुन्दरः । श्रीआचार्यैरुच्यमानः श्रेष्ठिनाऽश्रूयत क्षणे ॥ ८८ ॥
श्रूयमाणस्य तस्योच्चैस्तिथीनां महिमा महान्। यदा चैकादशीतिथ्या माहात्म्यं समुपस्थितम् ॥ ८९ ॥
मया श्रुतमिदं पूर्वमस्तीति चिन्तयन् हृदि। जातिस्मृतिमवाऽऽपासौ द्वेधाऽपि श्रेष्ठिसुव्रतः ॥ ९० ॥
तस्यास्तस्यानुभावेन धर्मबुद्धिरवर्द्धत । व्यज्ञापयद् गुरूनेकं सारं ब्रूत दिनं मम ॥ ९१ ॥

---

१ द्वितीयापञ्चम्यष्टम्येकादशीचतुर्दश्यः पञ्च तिथयः । एताः शुभतिथयो गौतमगणधारिणा भणिताः ॥ १ ॥

२ द्वितीया द्विविधे धर्मे पञ्चमी ज्ञाने च अष्टमी कर्मणि च । एकादश्यङ्गानां चतुर्दशी चतुर्दशपूर्वाणाम् ॥ २ ॥

यत्र धर्म्यमनुष्ठानमेकशो विहितं हितम् । दत्ते पूर्णफलं मोक्षादिकसंसाधनक्षमम् || ९२ ||
चित्रसूत्रार्थमर्मज्ञो दोषज्ञो यः प्रजायते । येन यस्य समाधिः स्यात् तदेवौषधमाचरेत् || ९३ ||
इति च श्रेष्ठिनस्तस्य सन्मौनैकादशीतिथेः । ज्ञात्वा संसारनिस्तारं तामेव गुरवोऽवदन् || ९४ ||
मार्गशीर्षस्य या शुक्लैकादशी वर्त्तते तिथिः । तां पौषधोपवासादिकृत्यैराराधयानिशम् || ९५ ||
यदेकादश मासाः स्युर्वर्षैकादशीव्रतम् । प्रकुर्वतस्तव श्रेष्ठिन् ! मौनादिकरणेन तु || ९६ ||
पारणादिवसे ज्ञानपूजा कार्या तदा भृशम् । सन्साधर्मिकवात्सल्यं सङ्घपूजादि शक्तितः || ९७ || (युग्मम्)
सोऽपि पूर्वभवाभ्यासात् तन्नामश्रवणादपि । सन्तुष्टिं प्राप्नुवन् शिष्टां सम्यगाराधयत्तराम् || ९८ ||
एतेन विधिना मौनैकादशीव्रतमाचरेत् । य एकादशभिर्वर्षैर्द्धाऽपि स महोदयी || ९९ ||
यत्र राजा समीचीनस्तत्र प्रजाऽपि तादृशी । गुरुर्यत्र क्रियापात्रं तस्य शिष्या अपीदृशाः ||१००||
यत्र व्रतरतः श्रेष्ठी प्रायो लोकोऽपि तादृशः । व्रताच्छ्रेष्ठिसुखं दृष्ट्वा लोकोऽपि तद् व्रतं व्यधात् ||१०१||
अन्यदा सकुटुम्बेन श्रेष्ठिना व्रतचेतसा । सन्मौनैकादशीतिथ्यां कृतोऽहोरात्रपौषधः ||१०२||
पौषधग्राहिभिः सर्वैरपि श्वेतनिशामुखे । कायोत्सर्गे कृते दीपहस्ताश्चौराः समागताः ||१०३||
कायोत्सर्गस्थितास्तेऽपि सर्वे पश्यन्ति तस्करान् । पदे पदे धनं पुञ्जीभूतं पश्यन्ति तेऽपि च ||१०४||

ग्रन्थिं बध्वा मुदा मूर्ध्नि धृत्वा यावद् व्रजन्ति ते। तावत् शासनदेव्यैते स्तम्भिताः स्तम्भवत् क्षणात् ॥१०५॥
इतस्ततः प्रयातुं न पदमात्रमपि क्वचित् । शक्नुवन्ति शिरोभारास्तदा चिन्ताऽम्बुधिं गताः ॥१०६॥
प्रातःकालो यदा भावी तदाऽस्माकं च का गतिः ? । इति चिन्तयतां तेषां प्रभातसमयोऽभवत् ॥१०७॥
कोट्टपालेन ते दृष्टा बद्धाश्च दृढबन्धनैः । भूपालस्य पुरो नीतास्तेनाऽऽदिष्टा वधाय ते ॥१०८॥
उत्तमाः प्राणिघातं न कुर्वन्ति कारयन्ति च । अपकारिष्वपि प्राज्यां दयां कुर्वन्ति सर्वदा ॥१०९॥
पौषधं पारयित्वा तज्ज्ञात्वा च प्राभृतं धनम् । श्रेष्ठी महीपतेः पार्श्वे गत्वा सर्वानमोचयत् ॥११०॥
धन्यो धन्यो जिनस्यायं धर्मो यत्र दयेदृशी । धन्यः श्रेष्ठ्यपि येनामी मोचितास्तस्करा अपि ॥१११॥
इति श्रीजिनधर्मस्य प्रसिद्धिः श्रेष्ठिनस्तथा । प्रावर्द्धत समस्तेऽपि लोके शोकेन वर्जिते ॥११२॥
पुनरप्येकदा दाववह्निवन्निखिलं पुरम् । युगपत् ज्वालनायेव प्राज्वलद् ज्वलनो महान् ॥११३॥
तदा नागरिको लोकः समस्तोऽपि प्रणष्टवान् । निजजीवितरक्षाऽर्थं न के नश्यन्ति जन्तवः ? ॥११४॥
उज्वलैकादशीरात्रौ श्रेष्ठी गृहीतपौषधः । स्वकीयव्रतरक्षाऽर्थं न नष्टः कुत्रचित् ततः ॥११५॥
आकाराः कथिताः सन्ति शास्त्रे जीवितरक्षणे । नंष्ट्वा त्वं जीवितं रक्ष मा कुरुष्व कदाग्रहम् ॥११६॥
इति नागरिकैर्लोकैरतिप्रोक्तोऽपि सुव्रतः । मा भूयाद् व्रतभङ्गो मे नानश्यच्चिन्तयन्निति ॥११७॥

ज्वलितं नगरं सर्वमप्यरण्यमिवाभितः । सुव्रतश्रेष्ठिनो हट्टगेहानि नाज्वलन् मनाक् ॥११८॥
समुद्रे द्वीपवत् तस्य हट्टगेहानि वीक्ष्य च । प्रातः प्रशंसयामासुर्निखिला अपि नागराः ॥११९॥
अहो ! धर्मस्य माहात्म्यमस्याहो ! दृढता व्रते । पालयेद् व्रतमेवं यो द्वेधाऽप्यस्य शिवं भवेत् ॥१२०॥
एकादशीव्रते पूर्णे श्रेष्ठिना जनिते सति । उद्यापनाय वस्तूनि सम्मेलितान्यनेकशः ॥१२१॥
मुक्ताफलानि रत्नानि शङ्खः प्रवालकानि च । स्वर्णानि कलधौतानि ताम्राणि पित्तलानि च ॥१२२॥
त्रपुकांस्यसिलासारप्रमुखाः सप्त धातवः । पट्टकूलस्फुरत्क्षीरोदकादीन्यम्बराणि च ॥१२३॥
धान्यानि बहुभेदानि पक्वान्नादीनि भूरिशः । नालिकेरसहकारद्राक्षादीनि फलानि च ॥१२४॥
सुवर्णकलधौतानां कुसुमानि घनानि च । अशोकमालतीजातीपुष्पादिकान्यनेकशः ॥१२५॥
इत्यादिकानि वस्तूनि तत्रैकादशसङ्ख्यया । शिवाय ढौकयामासार्हतां पुरो जिनाऽऽलये ॥१२६॥ (कुलकम्)
एवं विस्तारतः कृत्वोद्यापनं सङ्घपूजनम् । सत्साधर्मिकवात्सल्यान्यकारिपत तेन तु ॥१२७॥
सप्तक्षेत्र्यां वपन् द्रव्यं दधद् दीनोद्धृतौ मतिम् । कृतार्थं मानुषं जन्म कृतं तेन विवेकिना ॥१२८॥
यतः—

"×छत्रे काञ्चनकुम्भसम्भवभवो राज्ये विपक्षक्षयः श्रीकोटौ शुभपुत्रसन्ततिफलं हारेऽपि चिन्तामणिः ।

× इदं पद्यद्वयं 'क' 'ख' इति प्रत्योर्न वर्तते । पूर्वाशृत्तौ मुद्रित्वाद् अस्माभिस्तादृगवस्थं सम्पादितमस्ति ।

दाने पात्रपवित्रता तत्तुमतां दुग्धाब्धिमध्ये सिताः, ह्युद्योतनमेवमात्मतपसि श्रेयोभिरेवाऽऽप्यते ॥१॥
प्रासादे कलशाधिरोहणसमं बिम्बे प्रतिष्ठोपमं पुण्यश्रीस्फुटसंविभागकरणं बिभ्रद् विशिष्टे जने ।
सौभाग्योपरिमञ्जरीप्रतिनिभं पूर्णे तपस्याविधौ यः शक्त्योद्यापनं करोति विधिना सम्यग्दृशां सोऽग्रणीः ॥२॥ "

एकदा स्वकुटुम्बस्य जाग्रज्जागरिकां निशि । चित्ते विचारयामास धर्मिणां धर्मगा मतिः ॥१२९॥
ममैकादशीपुण्याद् भार्यास्वेकादशस्वपि । पुत्रा दश दशाभुवन्नैकिकाः पुत्रिकाः पुनः ॥१३०॥
स्वर्णैकादशकोटीनां प्रवर्त्ते प्रथितः पतिः । लोकैर्मान्योऽस्म्यहं यावद् दीक्षां गृह्णामि तावता ॥१३१॥
यदि मे सद्गुरोर्योगो मिलेद् भाग्यानुयोगतः । तदाऽवश्यं च गृह्णामि चारित्रं मोक्षसाधकम् ॥१३२॥
इति चिन्तयतस्तस्य प्रातःकालो भवेद् यदा । तदैवोद्यानपालेन सद्वर्द्धापनिका ददे ॥१३३॥
स्वामिन्! मम वने भूयोविनेयपरिवारवान् । चतुर्ज्ञानधरोऽथाऽऽगात् सूरिः श्रीजयशेखरः ॥१३४॥
एवमागमनं श्रुत्वा श्रीगुरूणां तदन्तिकात् । आनन्दतरां श्रेष्ठी मनोरथफलाऽऽप्तितः ॥१३५॥
गृहीत्वा संनिधेस्तस्य सद्वर्द्धापनिकाधृतिम् । प्रददौ विपुलं वित्तं बहुकालसुखप्रदम् ॥१३६॥
ततो निजतनूजस्त्रीपरिवारेण संयुतः । भावान्नन्तुं जगामासौ श्रीगुरुं जयशेखरम् ॥१३७॥
वन्दित्वा स स्थितो यावत् तावता श्रीगुरूत्तमैः । प्राऽऽरब्धा देशना धर्मसमृद्धिवृद्धिवर्द्धनी ॥१३८॥

×तपस्तीव्रघरट्टोऽयं क्षमामर्कटिकान्वितः । धृतिहस्तो मनःकीलः कर्मधान्यानि चूर्णयेत् ॥१३९॥
तत्र तैः प्रथमः साधु साधुधर्मोऽभ्यधीयत । सुकुमारो गृहस्थानां द्वितीयः स निवेदितः ॥१४०॥
किन्तु निर्ग्रन्थधर्मेण मोक्षे पवनवेगवत् । गम्यते गृहधर्मेण रङ्गत्तुरङ्गवेगवत् ॥१४१॥
गृही यः स्यादसौ दानशीलतपोऽतिभावनाः । भावयन् लभते मुक्तिं द्वादशव्रतसेवनात् ॥१४२॥
यो धर्मो यतिनां पञ्चमहाव्रतपुरस्सरः । प्रोक्तो भगवता भव्यस्तेन मोक्षं द्रुतं व्रजेत् ॥१४३॥

यदुक्तम्—

"चारित्ररत्नान्न परं हि रत्नं चारित्रवित्तान्न परं हि वित्तम् । चारित्रलाभान्न परो हि लाभश्चारित्रयोगान्न परो हि योगः ॥ १ ॥
दीक्षा गृहीता दिनमेकमेव येनोग्रचित्तेन शिवं स याति । न तत् कदाचित् तदवश्यमेव वैमानिकः स्यात् त्रिदशः प्रधानः ॥ २ ॥"

एतच्चारित्रमाहात्म्यमाकर्ण्य भविका बुधाः ! । यूयं गृह्णीत चारित्रं यदि स्यान्मोक्षकामना ॥१४४॥
एवं गुरुवचः श्रुत्वा चारित्राऽशक्तयो जनाः । सद्द्वादशव्रतादीनि व्रतानि जगृहुर्मुदा ॥१४५॥
चरणग्रहणे पूर्वचित्तोऽथ सुव्रतोऽब्रवीत् । अहं संसारकान्तारभयोद्विग्नोऽस्मि तारक ! ॥१४६॥
गृहभारं समारोप्य स्वपुत्रेषु यथोचितम् । श्रीमतां सविधे दीक्षां ग्रहीष्यामि विमुक्तये ॥१४७॥

× इदं पद्यं 'क' 'ख' इति प्रतिद्वये नास्ति ।

आनन्दमेदुरोऽवादीद् गुरुर्गुरुमनीषया । यथासुखं प्रवर्त्तस्व प्रतिबन्धं विधेहि मा ॥१४८॥
श्रेष्ठी ततो गृहं गत्वा भोजयित्वा कुटुम्बकम् । पार्श्वात् स्वजनपुत्राणां दीक्षाऽऽदेशममार्गयत् ॥१४९॥
अयं संसारकृत्यादि कृत्वा प्राप्तः कृतार्थताम् । तृतीयस्मिन् वयस्यात्मसाधनं साध्यतां वरम् ॥१५०॥
चिन्तयित्वेति निःशेषैरपि स्वजनपुत्रकैः । दीक्षाऽऽदेशो ददे देवकैवल्यपदसाधकः ॥१५१॥
पुनः पृष्टं स्वपत्नीनां ताः प्रोचुः प्राणवल्लभ ! । या गतिर्भवतः सैव ज्ञेयाऽस्माकमपि प्रभो ! ॥१५२॥
अतुच्छैरुत्सवैरच्छच्छविच्छायाविधायिभिः । सहैकादशकान्ताभिर्दीक्षा तेनाऽऽददे तदा ॥१५३॥
पवित्रं पालयामास चारित्रं सुव्रतो व्रती । चतुर्थादिकभूयिष्ठतपःप्रजननेन तु ॥१५४॥
जनिते द्वे शते षष्ठे अष्टमानां शतं तथा । चतुष्टयं चतुर्मास्या एकं षाण्मासिकं तपः ॥१५५॥
स मौनैकादशीतिथ्यास्तपस्तपन् विशेषतः । पाठको द्वादशाङ्गीनां शुद्धां दीक्षामपालयत् ॥१५६॥
तस्यैकादशपत्न्योऽपि केवलज्ञानमाप्य च । माससंलेखनां कृत्वा दीक्षया मोक्षमासदन् ॥१५६॥
अन्यस्मिन् दिवसेऽन्यस्य वाचंयमस्य कस्यचित् । शूलादिवेदना तीव्रा प्रादुर्बभूव विग्रहे ॥१५७॥
सुव्रतर्षेस्तदैवास्ति मौनेनैकादशीव्रतम् । सुरासुरनराधीशैरपि चाल्यं न जातुचित् ॥१५८॥
चालयामि व्रतादेनं व्रतिनं सुव्रतं दृढम् । मदग्रे दृढताधारी कः समस्ति मुनीश्वरः ? ॥१५९॥

एको निष्कारणं वैरीभवन् व्यन्तरनिर्जरः । प्रचक्रे वेदनां चण्डां सुव्रतव्रतिनस्तनौ ॥१६०॥
अप्रकम्पो निजध्यानलीनो मेरुगिरीन्द्रवत् । सहते वेदनां सर्वां न खिद्यते मनागपि ॥१६१॥
अर्हन्तो भगवन्तो ये साधवो गणधारिणः । इन्द्राश्चन्द्रा दिनेन्द्राश्च नागेन्द्रा व्यन्तरेन्द्रकाः ॥१६२॥
सचक्रवर्तिनो वासुदेवाः प्रतिनरायणाः । बलदेवा नराधीशा मानवा अपरेऽपि च ॥१६३॥
कर्मणा पापिनाऽनेन ते सर्वेऽपि विडम्बिताः । कियन्मात्रो वराकोऽहं पुरस्तात् तस्य कर्मणः? ॥१६४॥
अरे ! जीव ! क्षमस्व त्वमुदितं कर्म तेऽस्ति यत् । तद् भोगेन विना नैव प्रक्षीयेत कदाचन ॥१६५॥
एवमभ्यास्यमानेन साधुना सुव्रतर्षिणा । वेदनाऽसह्यताऽशेषा धर्मध्यानावलम्बिना ॥१६६॥
विभङ्गज्ञानयोगेन मिथ्यादृग् व्यन्तरः सुरः । मुनिमक्षुभितं मत्वा प्रत्यक्षीभूय सोऽवदत् ॥१६७॥
ऋषे ! तव कृपां कुर्वे गत्वा श्राद्धनिकेतनम् । वेदनां वदतात् सर्वां स त्वामुपचरेद् यथा ॥१६८॥
समस्ति नियमो मेऽद्य निर्गन्तुं वसतेर्बहिः । कथं श्राद्धगृहं गत्वा चिकित्सां कारयाम्यहम्? ॥१६९॥
मौनव्रतं तथा मेऽस्ति तद्भङ्गं जल्पनात् कथम् । करोमि कायरक्षार्थं? व्रतभङ्गो हि दुःखदः ॥१७०॥

यदुक्तम्ः—

"कण्ठपाशविधानेन वरं मरणकारणम् । वैश्वानरे प्रवेशो वा झम्पापातोऽपि पर्वतात् ॥ १ ॥

विपस्य भक्षणं तालपुटस्य मरणाय च । पाणिप्रक्षेपणं सर्पत्सर्पस्य वदने वरम् ॥ २ ॥
किन्तु व्रतविलोपो न वरं पातकजातकृत् । भवे भवे प्रभूतार्त्तिघोरदुःखप्रदायकः ॥ ३ ॥ "

व्रतरक्षाकृते तेन स्वप्राणास्तृणवत् कृताः । परं व्रतस्य भङ्गो न चक्रे तेन महर्षिणा ॥१७१॥
वेदनां सहमानस्य दुःखं तस्य बभूव न । प्रत्युताशेपकर्माऽऽलेर्निर्जरा समजायत ॥१७२॥
दृढं तं व्रतरक्षायां विज्ञाय व्यन्तरः क्रुधा । पद्भ्यां तं हतवान् मूर्ध्न्यपतत् पाषाणवत् मुनिः ॥१७३॥
शिरःशरीरयोः पीडा समभूत् तस्य यादृशी । कस्याप्यन्यस्य तादृक् स्यात् म्रियते क्षणतोऽपि सः ॥१७४॥
वज्रऋषभनाराचसंहननस्तपोधनः । निरुपक्रमजीवत्वान्न सोऽम्रियत पीडया ॥१७५॥
धर्मेण सहमानस्य वेदनां सुव्रतव्रती । क्षपकश्रेणिमारूढः केवलज्ञानमाप्तवान् ॥१७६॥
उत्पन्ने केवलज्ञाने सुव्रतर्पेर्महात्मनः । मर्त्यामर्त्यसमूहस्य सन्तुष्टिः समजायत ॥१७७॥
मृदङ्गतालवीणादिचित्रवादित्रमद्भुतम् । तत् सज्जीकृत्य गायन्ति केचिन्नृत्यन्ति निर्जराः ॥१७८॥
केश्चिच्चामीकराम्भोजं रचितं खचितं रुचा । तत्र स्थितोऽवद् धर्मं केवली सुव्रतव्रती ॥१७९॥
शास्त्रोक्तैर्दशदृष्टान्तैर्दुष्प्रापं जन्म मानुषम् । मर्त्यास्तदेव सम्प्राप्य प्रमादं जनयन्ति ये ॥१८०॥
चिन्तारत्नं विकीर्णं तैर्वायसोड्डायनाय च । पीयूषं पादशौचाय विनिर्मितं दुरात्मभिः ॥१८१॥ (युग्मम्)

कृतार्थं यैः कृतं जन्म प्रत्याख्यानव्रतादिभिः । तेषां स्वर्गापवर्गादिसौख्यं भवति शाश्वतम् ॥१८२॥
एवमाकर्ण्य भो भव्याः ! धर्मस्य कुरुतोद्यमम् । धर्मकर्मविधानेन गृह्णीत जन्मनः फलम् ॥१८३॥
धर्मेणैवेष्टसम्प्राप्तिर्धर्मेणैव जयश्रियः । धर्मेणैव रमाः प्राज्या धर्मेणैव रिपुक्षयः ॥१८४॥
रमणी रमणीयाऽपि धर्मेण सकलाः कलाः । सारसन्तानसम्पत्तिर्धर्मेण विशदं यशः ॥१८५॥
कष्टेन करणीयः स सुखकृत् क्वाथवद् भृशम् । न विना तद्विधानेन कर्मनीरोगता भवेत् ॥१८६॥
धर्मस्यानल्पमाहात्म्यं श्रुत्वा केवलिनो मुखात् । केचिदाददिरे दीक्षां केचिच्च द्वादशव्रतीम् ॥१८७॥
प्रतिबोध्य जनानन्ते कृत्वा संलेखनां शुभाम् । केवलज्ञानसंयुक्तः सुव्रतर्षिः शिवं ययौ ॥१८८॥
एवमेकादशीसारमाहात्म्यं नेमिनो मुखात् । समाकर्ण्य मुकुन्दोऽप्याराधयामास तां सदा ॥१८९॥
पौषधो दशमीरात्रौ कर्त्तव्यो विधिपूर्वकः । एकादश्यां तथैवाष्टप्रहरः स तमोहरः ॥१९०॥
एष मूलविधिः प्रोक्तो यथाशक्ति प्रकुर्वते । तस्या आराधनं भव्या महाऽऽनन्दैकसम्पदे ॥१९१॥
श्रीवीरस्य जिनेशस्य श्रीगौतमगणेन्दुना । विचारः पर्वतिथ्यादेः पृष्टो निशीथसूत्रके ॥१९२॥
तदैवैकादशीभूयोमहिमाऽयं निवेदितः । मुक्तिकामुकजन्तूनामुपकारविधायकः ॥१९३॥
श्रीश्रीहीरविजयगुरुपट्टे श्रीविजयसेनसूरीन्द्राः । तेषां स्वच्छे गच्छे विबुधश्रीराजसागरकाः ॥१९४॥

तेषां शिष्यभुजिष्यो निजमत्यनुसारतश्च माहात्म्यम् । मौनस्यैकादश्याश्चकार रविसागरो विबुधः ॥१९५॥
पत्राऽऽज्ञाहरपार्श्वो यत्र स्तूपश्च हीरविजयगुरोः । यस्योपान्ते द्वीपाभिधवन्दिरमस्ति शास्तिकरम् ॥१९६॥
उन्नतनगरे तस्मिन्नेतत् पूर्णीबभूव विद्वद्भिः । संशोध्य वाच्यमब्दे सागरशररसशशिप्रमिते ॥१९७॥

इति श्रीरविसागरविरचितं मौनैकादशीमाहात्म्यं सम्पूर्णम् ।



अर्हम् ।

श्रीजिनेन्द्रसागरविरचिता

# श्रीपौषदशमीकथा ।



ध्यात्वा वामेयमर्हन्तममेयमहिमाऽऽस्पदम् । वक्ष्ये कथां पौषमाससत्कृष्णदशमीतिथेः ॥ १ ॥
अत्रैव भरतक्षेत्रे राजद्राजगृही पुरी । धनधान्यसमाऽऽकीर्णा शुभौ स्वर्गपुरी यथा ॥ २ ॥
एकदा विहरन् भूमावुद्याने समवसृतः । भगवान् श्रीमहावीरः केवलज्ञानभास्करः ॥ ३ ॥
गौतमप्रमुखैर्मुख्यैरेकादशगणाधिपैः । चतुर्दशसहस्रैश्च साधुभिः सह संवृतः ॥ ४ ॥ (युग्मम्)
जिनाऽऽगमनमाकर्ण्य नागरा वन्दनोत्सुकाः । वन्दनार्थं समाजग्मुः श्रेणिकक्षितिपा अपि ॥ ५ ॥
त्रिप्रदक्षिणकां कृत्वा नत्वा च विधिना जिनम् । समासीनाः सभामध्ये भूपाला भूस्पृशोऽपि च ॥ ६ ॥
दिदेश श्रीजिनेशो द्राग् देशनां धर्मदेशनाम् । सुधाकृतसुधां शुद्धां तत्क्षणे तत्सभापुरः ॥ ७ ॥
अत्रान्तरे महावीरं भम्भसारः क्षमापतिः । नत्वा व्यजिज्ञपच्छीघ्रं नियोजितकरद्वयः ॥ ८ ॥

हे स्वामिन्! पौषमासेऽस्मिन् सर्वोत्कृष्टस्तु वासरः। वर्त्तते कः? तदाख्याहि कृपां कृत्वा सभापुरः ॥ ९ ॥
लाभं विभाव्य भगवानूचिवानिति सद्वचः। पौषमासाऽऽद्यदशमीवासरः पुण्यभासुरः ॥ १० ॥
तत्कथां श्रेणिको भूपः पप्रच्छ स्वामिनं पुरः। अभाषिष्ट जिनश्रेष्ठो माहात्म्यं दशमीतिथेः ॥ ११ ॥
जम्बूद्वीपे मेरुपार्श्वे समभूतलपर्वतः। योजनानां नवसङ्ख्यशतमध्ये ग्रहव्रजाः ॥ १२ ॥
ततः परमसङ्ख्याता यौजन्यकोटिकोटयः। उल्लङ्घितेषु तेषूर्द्ध्वं सौधर्मेशानसद्दिवौ ॥ १३ ॥
क्रमेण दशमः स्वर्गः प्राणताऽऽख्यः प्रसिद्धिभाक्। आयुषः संस्थितिस्तत्र सागराणां तु विंशतिः ॥ १४ ॥
तदायुषः स्थितिं भुक्त्वा कृत्वा देवभवक्षयम्। अच्युतत् स्वर्गतस्तस्मात् पार्श्वजीवो महासुरः ॥ १५ ॥
जम्बूद्वीपो महाद्वीपो लक्षयोजनविस्तृतः। परिधिस्तस्य विख्याता सिद्धान्ते तां भणाम्यथ ॥ १६ ॥
यतः—

परिही तिलक्खसोलससहस्सदोयसयसत्तवीसहिया। कोसतिगमट्ठावीसंधणुसयतेरंगुलद्धहियं ॥ १ ॥
( लघुसंघयणी )

तत्र श्रीभरतक्षेत्रे भरिते भूरिभूतिभिः। पुरं वाराणसीसंज्ञं पुरन्दरपुरोपमम् ॥ १७ ॥

१ परिधिस्त्रिलक्षषोडशसहस्रद्विशतसप्तविंशत्यधिकः। कोशत्रिकाष्टाविंशतिधनुःशतत्रयोदशाङ्गुलार्धाधिकः ॥ १ ॥

पर्वकथासंग्रहः

निशम्यते यत्र पुरे तु दण्डः प्रासादशीर्षे, न पुनः प्रजासु ।
विद्वज्जनानां मनसस्तु चौराः, श्रियाश्च चौरा नहि सन्ति केचित् ॥ १८ ॥
प्रासादमूर्द्धः कलशस्थले हि, यत्रार्कबिम्बं प्रतिभाति नित्यम् ।
केतुस्थले स्वर्गनदी मनोज्ञा, किं वर्ण्यते वर्णनमेव तस्याः ? ॥ १९ ॥ (युग्मम्)

अन्याय इति शब्दस्तु शास्त्रेषु, जनतासु नो । दातारः प्रचुरा यत्र याचकाः स्तोकमात्रकाः ॥ २० ॥
तत्राश्वसेनभूपालो भूपालाऽऽलिपुरःसरः । प्रजापालनसंसक्तो राजते सार्वभौमवत् ॥ २१ ॥ (युग्मम्)
रतिवचारुरूपाऽऽढ्या सुपौलोमीव सुन्दरा । स्फारलावण्यसम्पूर्णा तिरस्कृततिलोत्तमा ॥ २२ ॥
वामा वामभ्रुवां मध्येऽभिरामा गुणराजिभिः । वामा राज्ञी बभौ तस्य पट्टराज्ञी शुभाऽऽशया ॥ २३ ॥ (युग्मम्)
तस्याः कुक्षौ समुत्पेदे श्रीपार्श्वपरमेश्वरः । राज्ञी ददर्श तद्रात्रौ स्वप्नानि च चतुर्दश ॥ २४ ॥
आद्यस्वप्ने गजो दृष्टो द्वितीये वृषभः शुभः । तृतीये केसरी सिंहो महालक्ष्मीश्चतुर्थके ॥ २५ ॥
पञ्चमे पुष्पमाला च षष्ठे स्वप्ने हिमद्युतिः । सप्तमे सविता दृष्टो ध्वजा दृष्टाऽष्टमे तथा ॥ २६ ॥
नवमे कलशः पद्मसरस्तु दशमे तथा । एकादशे पयःसिन्धुर्द्वादशे सुरमन्दिरम् ॥ २७ ॥
त्रयोदशे रत्नराशिर्निर्धूमाग्निश्चतुर्दशे । स्वप्नान्येतानि दृष्ट्वा चाजागरत् सा स्वयं तदा ॥ २८ ॥

मुमुदे मनसि स्वप्नान् तान् सस्मार पुनः पुनः । जिनानां गोत्रदेवीनां नामानि समुपाऽऽददे ॥ २९ ॥
समुत्थाय ततः स्थानात् विचरन्ती शनैः शनैः । श्रीअश्वसेनभूभर्तुः समीपे सा समागमत् ॥ ३० ॥
प्राबोधयद् धवं राज्ञी सुधामधुरया गिरा । राजाऽपि जागरामास कृत्वाऽऽलस्याङ्गमोटनम् ॥ ३१ ॥
पप्रच्छ राजा हे देवि ! साम्प्रतं कथमागता ? । तदा स्माऽऽह मया स्वामिन् ! सुप्ते वासगृहे वरे ॥ ३२ ॥
जाग्रतीपद् वारणादिसुस्वप्नानि चतुर्दश । प्रबुद्धा प्रविलोक्यैवं तत्फलं ब्रूहि मत्पुरः ॥ ३३ ॥
दृष्टानि चारुस्वप्नानि राजा प्राऽऽह त्वयाऽनघे ! । आत्मनो भविता पुत्रः चक्रवर्त्ती जिनोऽथवा ॥ ३४ ॥
सत्यमेतदिति प्राऽऽह राज्ञी भूधवसद्धवम् । उररीकृत्य तद्वाक्यं जगाम निजमन्दिरम् ॥ ३५ ॥
प्रातःकाले समाहूताः पण्डिताः स्वप्नपाठकाः । तेऽपि प्रोचुस्तथा स्वप्नफलमेका मतिः सताम् ॥ ३६ ॥
नातिरूक्षं नातितिक्तं नात्युष्णं नातिशीतलम् । भोजनं भोजयामास स्वगर्भकुशलाय सा ॥ ३७ ॥
क्रमेण नवमासानामथ सम्पूर्णतां गते । उच्चैःस्थितैर्ग्रहैः सर्वैर्निष्पन्ने क्षितिमण्डले ॥ ३८ ॥
हेमन्तर्तोर्द्वितीयश्च मासः श्रीपौषसंज्ञकः । आद्यः पक्षस्ततश्चैव तस्यैव दशमीतिथौ ॥ ३९ ॥
पुत्ररत्नं तदा राज्ञी सुषुवे सुखकारकम् । बिम्बोष्ठं चन्द्रवद्वक्त्रं नीलपद्मतनुच्छविम् ॥ ४० ॥
लक्षणैर्लक्षितं सम्यक् कदलीगर्भकोमलम् । सुरासुरनरैर्वन्द्यं श्रीपार्श्वपरमेश्वरम् ॥ ४१ ॥ (कलापकम्)

तस्मिन्नेव क्षणे भक्त्या चतुःषष्टिः सुरेश्वराः । अमीमिलन् प्रभोर्जन्माभिषेकविधिहेतवे ॥ ४२ ॥
प्रभुं नत्वा स्तवैः स्तुत्वा गृहीत्वा करसम्पुटे । चतुःषष्टिः सुराधीशा आजग्मुर्मेरुपर्वते ॥ ४३ ॥
मेरुपर्वतचूलायामुपाऽऽवेश्य जिनेश्वरम् । सौधर्मेन्द्रादयश्चक्रुः स्वामिनो जननोत्सवम् ॥ ४४ ॥
प्रत्यागताः सुराधीशाः कृत्वा पार्श्वजिनोत्सवम् । आत्मानं कृतकृत्यार्थं मन्यमाना मुहुर्मुहुः ॥ ४५ ॥
रूप्यहाटकरत्नानां द्वात्रिंशत्कोटिवृष्टयः । ततो भूपगृहे देवाः पातयामासुराशु ते ॥ ४६ ॥
अथ द्वितीयबालेन्दुरिव बालः प्रभुः स्वयम् । वर्द्धते लालितः शश्वत् पञ्चभिर्धात्रिमातृभिः ॥ ४७ ॥
क्रमेण यौवनं प्राप्तः श्रीपार्श्वपरमेश्वरः । पित्रा प्रभावतीराज्ञ्या विवाहो विहितः प्रभोः ॥ ४८ ॥
अन्येद्युस्तत्पुरीबाह्ये तापसः कमठः शठः । पञ्चाग्निसाधकः कुण्ठ आगतोऽज्ञानकष्टकृत् ॥ ४९ ॥
गवाक्षस्थेन पार्श्वेन सेवकानां तदा मुदा । पृष्टं भोः ! सेवकाश्चाद्य कुत्र गच्छन्ति नागराः ? ॥ ५० ॥
तैः प्रोक्तं युवराजेन्द्र ! तापसः कमठाभिधः । समागतोऽस्ति तं नन्तुं तत्र लोका व्रजन्त्यमी ॥ ५१ ॥
ऐरावतगजस्पर्द्धिगजमारुह्य सत्वरम् । क्रीडामिषेण पार्श्वोऽपि तत्पार्श्वे समुपागमत् ॥ ५२ ॥
कुर्वन्नज्ञानकष्टानि प्रभुः प्रोवाच तापसम् । करोषि त्वं मुधाऽज्ञानतपः किल दयां विना ॥ ५३ ॥
प्रत्युवाच प्रभुं सोऽथ यूयं राजेन्द्रसूनवः । वाजिक्रीडाविधौ दक्षा नास्मत्तापसवृत्तिषु ॥ ५४ ॥

तदा पार्श्वाऽऽज्ञया काष्ठमध्यात् भृत्येन सत्वरम्। कुठाराभ्यां द्विधा कृत्वा न्यकासि* दग्धपन्नगः ॥ ५५ ॥
धिग् धिगस्तु कृतो लोकैस्तापसः कमठः शठः। प्रशंसां पार्श्वनाथस्य लोका विदधिरे मुहुः ॥ ५६ ॥
कियद्वर्षे गतेऽन्येद्युर्विज्ञाय समयं प्रभुः। दत्त्वा संवत्सरीदानं ललौ दीक्षां जिनाधिपः ॥ ५७ ॥
एकदा श्रीजिनाधीशा मूले वटतरोः स्वयम्। कायोत्सर्गस्थिताः सन्ति ध्यानस्तिमितलोचनाः ॥ ५८ ॥
दुर्ध्यानात् कमठो मृत्वा मेघमाली सुरोऽजनि। उपसर्गं कृते तस्मिन् न चचाल प्रभुर्मनाक् ॥ ५९ ॥
अथाऽऽप्य केवलज्ञानं श्रीपार्श्वपरमेश्वरः। भुक्त्वा वर्षशताऽऽयुष्कं जगाम शिवमन्दिरम् ॥ ६० ॥

अस्मिन् दिनेऽभूज्जिनपार्श्वजन्म प्रोक्तस्ततोऽयं दिवसः प्रशस्यः।
इत्थं बभाषे जिनवर्द्धमानः श्रीश्रेणिकक्षोणिपतेः पुरस्तात् ॥ ६१ ॥

किं कर्त्तव्यं दिनेऽस्मिंश्च ? कृते प्रश्ने क्षमाधवे। उवाच भगवान् वीरः श्रेणिकादिसभापुरः ॥ ६२ ॥
दिनेऽत्र श्रावकैर्भक्त्या केसरैश्चारुचन्दनैः। जिनाऽऽलये जिनेन्द्राणां पूजा कार्या विचक्षणैः ॥ ६३ ॥
सत्सप्तदशभेदेन श्राद्धैः पार्श्वजिनेशितुः। अष्टोत्तरीस्नात्रपूजा विधेया विधिपूर्वकम् ॥ ६४ ॥
खेलनाग्वेलनं कार्यं स्तोतव्यं स्तवनैर्नवैः। भावना भावनीया च श्रीपार्श्वजिनमन्दिरे ॥ ६५ ॥
ग्राममध्ये परग्रामे यत्र श्रीपार्श्वमन्दिरम्। श्रीसङ्घैस्तत्र गन्तव्यं श्रीपार्श्वनमनेहया ॥ ६६ ॥

श्रीगुरूणां पदाब्जानि नम्यानि श्रावकैस्ततः । श्रोतव्यं तन्मुखात् पार्श्वप्रबन्धं बन्धबन्धुरम् ॥ ६७ ॥
प्रतिलाभ्यास्ततः श्राद्धैः साधवः स्वगृहाऽऽगताः । आज्यैः प्राज्यैः सखण्डैश्च तद्दिने तु विशेषतः ॥ ६८ ॥
पानीयाऽऽचाम्लवल्लोकैः प्रभूतैः सुघृतैस्ततः । भोजनैर्भोजनं कार्यमेकाशनतपः पुनः ॥ ६९ ॥
भुक्त्वा पश्चात् समुत्थाय पयः पेयं पुनर्नहि । तदाऽऽचाम्लतपोलाभं तद्दिने लभतेतराम् ॥ ७० ॥
एवं हि देशना दत्ता श्रीश्रीमज्ज्ञातनन्दनैः । समुत्थिताः सर्वसभ्याः श्रेणिकप्रमुखा अपि ॥ ७१ ॥
जग्मुः स्वस्वगृहे तैस्तैस्तथैव कृतमुत्तमैः । अस्मिन् दिनेऽधुनाऽप्येवं सा तु रीतिर्विधीयते ॥ ७२ ॥

माहात्म्यमेतद् विधिना जना ये शृण्वन्ति पौषादिमसद्दशम्याः ।
सदा लभन्तेऽद्भुतसम्पदस्ते सौभाग्यसद्भाग्यगणाश्रिताः ॥ ७३ ॥
श्रीमद्यशस्वज्ज्वलराशिशिष्यो मुक्तो जिनेन्द्राभिधरस्तु प्रबन्धम् ।
श्रीश्रीमतां गौतमसागराणां वाक्येन शीघ्रं रचयाञ्चकार ॥ ७४ ॥

इति श्रीपौषदशमीकथा सम्पूर्णा ।

अर्हम् ।

श्रीपुण्यराजगणिविरचितः

# श्रीहोलीप्रबन्धः ।

प्रणम्य सम्यक् परमार्थदेशकं श्रीवर्द्धमानं भुवनैकनायकम् ।
जनप्रबोधाय मयाऽभिधीयते होलीरजःपर्वकथा यथाश्रुतम् ॥ १ ॥
जैत्रं पुरन्दरपुरस्य पुरा पुराणमास्ते पुरं जयपुरं परमर्द्धिधाम ।
तत्र प्रतापवसतिर्जयवर्मनामा क्षोणीपतिः प्रतिहतप्रतिपक्षपक्षः ॥ २ ॥
श्रेष्ठी मनोरथ इति प्रथितो महेभ्यश्रेणीमणीमुकुटमत्र पवित्रकीर्त्तिः ।
लक्ष्मीरखण्डशशिमण्डलजैत्रवक्त्रलक्ष्मीरमुष्य दयिता पुरुषोत्तमस्य ॥ ३ ॥
होलीस्तयोरुपरि पुत्रचतुष्टयस्य पुत्री वभूव भुवनाद्भुतरूपधेया ।
ऊढाऽपि सा विधिवशाद् विधवाऽजनिष्ट स्नेहात् पिता निजगृहे जगृहे ततस्ताम् ॥ ४ ॥

तत्रान्यदा जनकधाम्नि गवाक्षसंस्था सा कामपालमवलोकयति स्म साक्षात् ।
अङ्गोद्भवं भुवनपालनृपस्य वङ्गदेशाधिपस्य मदनप्रतिरूपरूपम् ॥ ५ ॥
दृष्ट्वा निमेषविमुखप्रसृतिप्रमाणदृष्टिर्मुहुर्मुहुरसौ नवयौवनं तम् ।
सद्यः स्फुरत्स्मरशरप्रसराऽऽतुराऽभूत् भूपाऽऽत्मजोऽपि च तथाऽजनि तां निरीक्ष्य ॥ ६ ॥

यतः—

लोकेशकेशवशिवत्रिदिवप्रभूणां चूडामणिप्रणयिनी प्रथते यदाज्ञा ।
निःशेषविश्वविजयी विषमेषुरेष कं नावधीरयति धीरमपि प्रवीरः ? ॥ १ ॥

एनां ततः सततमर्त्तिविवर्त्तमाननानाऽऽशयां परिहृतापरसर्वकृत्याम् ।
आलोकयन् निजसुतां सुतरामभीष्टां श्रेष्ठी विषादपदवीं सपदि प्रपेदे ॥ ७ ॥

इतश्च—

प्रव्राजिका द्विजकुलोद्भवचण्डरुद्रभण्डाऽऽत्मजा भरटकाचलभूतिपत्नी ।
तुण्डेत्यजायत पुरेऽत्र जनस्य भूतिकर्मादिकृत् कपटकोटिविदग्धबुद्धिः ॥ ८ ॥
क्षुत्क्षामकुक्षिकुहरा भ्रमति स्म भिक्षासम्प्राप्तये प्रतिदिनं प्रतिमन्दिरं सा ।
लाभान्तरायवशगा भृशदुर्भगा तु लेभे न किञ्चन चुकोप जनाय तेन ॥ ९ ॥

सत्कृत्य सा निजगदेऽथ मनोरथेन सुस्थामिमां मम सुतां कुरु विश्वपूज्ये ! ।
पृष्टाऽर्त्तिहेतुमनया च रहस्युवाच होलीर्दृढां परिवृढाङ्गजसङ्गमेच्छाम् ॥ १० ॥
प्रव्राजिका तत उपायमभीष्टसिद्धेराचष्ट दुष्टहृदया कपटे पटिष्ठा ।
अर्चामिपादू रविदिने रविसद्म गच्छेर्वत्से ! कुमारमपि तत्र च मेलयिष्ये ॥ ११ ॥
होलीर्जगाम रविधाम तदा कुमारः कामाऽऽतुरश्चतुरया महितो व्रतिन्या ।
तत्राऽऽलिलिङ्ग सहसा महसामधीशमभ्यर्च्य तामभिमुखं विनिवर्त्तमानाम् ॥ १२ ॥
साऽऽख्यद् विशामि दहने ध्रुवमन्यथाऽन्यपुंस्पर्शपातकमलान्न लभे विशुद्धिम् ।
एवं दृढाऽऽग्रहपरामतिगूढदम्भामेतां बलेन जनकः सदनं निनाय ॥ १३ ॥
प्रव्राजिकाऽथ निशि फाल्गुनपूर्णिमायामानीय सङ्गमयति स्म तया कुमारम् ।
सुष्वाप तन्निकटसद्मनि चैतदुक्त्वा स्वाऽऽरब्धसिद्धिसुखनिर्भरलब्धनिद्रा ॥ १४ ॥
षट्कर्णमन्त्रमचिराद् भिदुरं विभाव्य होलीः स्फुरद्दुरभिसन्धिनिबद्धबुद्धिः ।
निद्राणतापसिगृहं स्वगृहं च दग्ध्वा सद्यः कुमारसहिता प्रपलाऽयते स्म ॥ १५ ॥
दग्धामवेत्य तनयां व्यलपत् पिताऽथ वत्से ! हहा ! किमिति साधित एव वह्निः ? ।

तत्प्रेत्यकृत्यमकरोच्च ततो जनस्तां ज्ञात्वा सतीं प्रणमति स्म तदीयभस्म ॥ १६ ॥
प्रत्यब्दमत्र दिवसेऽथ वृथैव होलीपर्वाखिले जगति तत्प्रभृति प्रवृत्तम् ।
उत्पद्यते न परमार्थविचारणार्थं यस्माद् गतानुगतिकः सकलोऽपि लोकः ॥ १७ ॥
जनस्ततोऽयं प्रतिवर्षमत्र दिनेऽधुनाऽपि च्छगणादिपुञ्जैः ।
होलीजरत्योः सदने विधाय दहत्यहो ! तत्त्वविमर्शशून्यः ॥ १८ ॥
ऊचेऽन्यदा प्रणयिनीमधनः कुमारः क्वापि व्रजामि धनमूर्जितमर्जयामि ।
सा प्रत्यधक् कुरु मदुक्तमुपायमीश ! येनैष पूरयति मे जनकस्तवार्थम् ॥ १९ ॥
त्वं शाटिकां मम पितुर्विपणौ गृहाण प्रोक्तस्तयेत्यथ चकार तथा कुमारः ।
नार्हति सा निजगृहात् प्रहिता तथाऽट्टे श्रेष्ठी पुनस्तदपरां प्रवरां ददौ ताम् ॥ २० ॥
पश्चादसावपि यदा प्रहिता तदानीं श्रेष्ठी स्फुटं वद वदेत्यवदद् विदग्धः ।
पत्नी तवात्र समुपैतु विशिष्टशाटीं सम्यग् निरीक्ष्य च परीक्ष्य च अग्रहीतु ॥ २१ ॥
दृष्ट्वा च तामुपगतां, दुहिता ममेयमित्यब्रवीद् धनपतिः प्रति कामपालम् ।
सोऽप्यूचिवान् सरलमानस ! किं न वेत्सि स्वामङ्गजां दहनदाहकथाऽवशेषाम् ? ॥ २२ ॥

भार्याभ्रमः समभवद् भवदीयपुत्र्यां पूर्वं ममापि रविधाम्नि, तवाधुना तु ।
अस्यां मदीयतनयेति मुधा मतिर्यत् सादृश्यमेव परमं ननु तत्र हेतुः ॥ २३ ॥
इभ्यस्तमभ्यधित सप्रणयं तवेयं पत्नी मयाऽथ तनयैव सदा प्रपन्ना ।
प्रीत्या ततः प्रभृति पूरयति स्म वेश्मालङ्कारभोज्यवसनादि स एव सर्वम् ॥ २४ ॥
उत्तीर्य दुस्तरमपारमवारपारं पारं परं व्रजति कोऽपि भुजाबलेन ।
स्त्रीणां पुनः प्रकृतिगूढदुराशयानां तेनाप्यहो ! दुरवगाहतरं चरित्रम् ॥ २५ ॥
दुष्टा मृताऽजनि पिशाच्यथ पूर्वजन्मभिक्षाद्यलाभमनुचिन्त्य सकोपचित्ता ।
चक्रे पुरोपरि शिलां जनचूर्णनाय होलीं प्रति प्रबलदैवबलामशक्ता ॥ २६ ॥
पौरा बलिं विदधते स्म ततः पिशाची साऽचीकथत् प्रकटमित्यवतीर्य पात्रे ।
भण्डान् विना भरटकांश्च निहन्मि शेषानेषा पुरातनकुलद्वयवत्सलाऽहम् ॥ २७ ॥
आकर्ण्य कर्णकटुवाक्यमिदं तदीयं दीना अनन्यशरणा मरणात् त्रसन्तः ।
स्वप्राणरक्षमपरौपयिकैरसाध्यं ध्यात्वा विमुक्तसुजनस्थितयस्तदानीम् ॥ २८ ॥
लोका असभ्यवचनोक्तिविगीतगानदुर्वाद्यवादनपराः श्रितभण्डभावाः ।

जाताः पुनर्भरटका इव भस्मधूलीसिन्दूरकर्दममलीमसविग्रहाश्च ॥ २९ ॥ (युग्मम्)

ततो रजःपर्व जनेऽनुवर्षं प्रवर्त्तते फाल्गुनपूर्णिमायाम् ।
तथा तदाह्वानकृताङ्गरक्षं डिम्भादिकं ढुण्ढितमाह लोकः ॥ ३० ॥

होलीरजःपर्व मुधा प्रवृत्तं ज्ञात्वा शुभार्थं न बुधैर्विधेयम् ।
श्रेयोऽर्थिभिः श्रीजिनधर्म एव सेव्यः समस्तेप्सितसिद्धिहेतुः ॥ ३१ ॥

यतः—

आयुर्दीर्घं वपुरपरुजं रूपमन्यासरूपं कान्तिः कीर्त्तिर्विलमविकलं बुद्धिरत्यन्तशुद्धा ।
इष्टावाऽऽप्तिर्मनुजदनुजस्वर्गसाम्राज्यसम्पत् पुष्पोल्लासः शिवमथ फलं धर्मकल्पद्रुमस्य ॥ १ ॥

एवं श्रीवरसोमसुन्दरगुरुश्रीमत्तपागच्छराट्शिष्यश्रीजयचन्द्रसूरिचरणाम्भोजप्रसादादयम् ।
सम्बन्धः किल पुण्यराजगणिना होलीरजःपर्वणोः सन्दृब्धः शरदन्तिरत्नशरदि प्राज्ञैश्चिरं वाच्यताम् ॥३२॥

इति होलीप्रबन्धः समाप्तः ॥

अर्हम् ।

# श्रीहोलीरजःपर्वप्रबन्धः ।

वर्द्धमानं जिनं नत्वा सुरासुरनतक्रमम् । वक्ष्ये होलीरजःपर्वप्रबन्धं प्रथितं जने ॥ १ ॥
न्यायलक्ष्मीसुखस्थाने पुरे जयपुराह्वये । जयवर्मनृपो जज्ञे प्रतापतपनोपमः ॥ २ ॥
तत्राऽमानरमादानपूरितार्थिमनोरथः । अस्ति शस्तधनख्यातिर्व्यवहारी मनोरथः ॥ ३ ॥
तस्य शस्यगुणग्रामाभिरामाऽस्ति सधर्मिणी । अलक्ष्मभृगलक्ष्माऽस्या लक्ष्मीरक्षूणलक्षणा ॥ ४ ॥
तयोरुपरि पुत्राणां चतुर्णां गुणशालिनाम् । पश्चेपोर्जयपत्रीव पुत्री होलीति विश्रुता ॥ ५ ॥
परिणीताऽपि सा पत्युर्विपत्त्या विधवाऽभवत् । स्वगेहे स्नेहतः पित्राऽऽनायिता तस्थुषी सुखम् ॥ ६ ॥
अन्यदा सा गवाक्षस्था कामपालं व्यलोकयत् । वङ्गदेशनरेशश्रीभुवनपालसम्भवम् ॥ ७ ॥
असरूपस्वरूपश्रीकामरूपविजित्वरम् । तं निरूप्य प्ररूढान्तर्गाढरागाऽऽतुराऽजनि ॥ ८ ॥

कामाऽऽर्त्तोऽसि महाभाग! वीक्ष्य त्वं श्रेष्ठिनः सुताम्। तच्छ्रुत्वा विस्मयस्मेरः कुमारः स्माऽऽह तापसीम् ॥१७॥
होली मे मेलयेः मत्वः प्रमादपरमानसा। सा प्राऽऽह स्म कुमारेन्द्र! व्रज त्वं रविमन्दिरे ॥१८॥
नरपुत्रो गतस्तत्र हेलिमभ्यर्च्य होल्यपि। निर्यान्ती तेन संस्पृष्टा प्रोचेऽसौ प्रविशाम्यहम् ॥१९॥
नान्यथाऽन्यनरस्पर्शपापाच्छुद्धिः कथञ्चन। मम स्यादिति जल्पन्ती पित्रा नीता गृहे बलात् ॥२०॥
तयोक्ता तापसी निन्ये कुमारं निशि तद्गृहम्। पट्कर्णो भिद्यते मन्त्र इति विज्ञाय पुंश्चली ॥२१॥
सुप्तां प्रमादिकां मत्वा होली प्रज्वाल्य तद्गृहम्। गता तेन युता सा च लेभे दम्भतरोः फलम् ॥२२॥
दग्धां निश्चाय तनयां सतीपङ्क्तिमतल्लिकाम्। विललाप धनी वत्से! किं वह्निः साधितः स्वयम्? ॥२३॥
दुःखाऽऽर्त्तः स सुचक्षेयं प्रेतकृत्यं चकार च। लोकोऽपि तां सतीं मत्वा तस्या भस्म स्म वन्दते ॥२४॥
तापसी व्यन्तरी जाता चमत्कारमदीदृशत्। राजाऽप्यकारयत् पर्व प्रजानां शान्तिहेतवे ॥२५॥
होलीपर्व ततो मिथ्या प्रवृत्तं निखिले जने। कान्तां गतश्रीराहाथ कुमारोऽन्यत्र गम्यते ॥२६॥
सा प्राऽऽह नाथ! मा कार्षीः खेदं ते पूरयिष्यति। मत्पिता सकलां लक्ष्मीं मद्बुद्धिं चेत् करिष्यसि ॥२७॥
गत्वाऽर्पय पितुर्हट्टे मदर्थं पट्टशाटिकाम्। कुमारेण तथा चक्रे तां मूल्येन धनी ददौ ॥२८॥
शाटिका स्वगृहे प्रैपि तेन नार्हति कान्तया। पश्चात् मुक्ता पुनः श्रेष्ठ्यप्यपरामार्पयत् स ताम् ॥२९॥

तां पश्चात् मह्तितां वीक्ष्य कुमारमभ्यधाद् धनी । हट्टे समेत्य ते भार्या वर्यां गृह्णातु शाटिकाम् ॥३०॥
ततस्तामागतां वीक्ष्य सुतेयं मे वणिग् जगौ । कुमारः स्माऽऽह किं वेत्सि नाग्निदग्धां सुतामृजो!? ॥३१॥
मत्सुतासदृशीयं ते भार्याऽस्तीति सुताभ्रमः । प्रतिपन्नाऽथ पुत्र्येव मयैषा तव वल्लभा ॥३२॥
वस्त्रालङ्कारभोज्यादि ततः पूरयतीश्वरः । दम्भवत्त्वमहो ! स्त्रीणामगम्यं महतामपि ॥ ३३ ॥
होलीपर्वप्रबन्धोऽयमाख्यातोऽथ निशम्यताम् । रजःपर्वाभिसम्बन्धः कथ्यमानो यथाश्रुतम् ॥ ३४ ॥
श्रीकाञ्चनपुरे राजा रिपुमर्दन इत्यभूत् । प्रव्राजिका च भूयिष्ठकष्टानुष्ठानशिष्टधीः ॥ ३५ ॥
बुभुक्षाक्षामकुक्षिः सा याचमाना गृहे गृहे । पुरेऽखिलेऽपि बभ्राम भिक्षां नाऽऽप पुनः क्वचित् ॥ ३६ ॥
पुरलोके सकोपाऽथ दुष्टकष्टानुभावतः । प्रव्राजिका पुरे जज्ञे राक्षसी स्वाऽऽयुषः क्षये ॥ ३७ ॥
प्राग्भवे सा पुरे भिक्षाऽलाभेन सरुषा सती । रोगान् व्यधात् घनाऽऽभोगान् पीडाक्रीडागृहानिव ॥ ३८ ॥
ततोऽतिदुःखितो लोकः शोकशङ्कुव्यथाऽऽकुलः । भूतप्रेतपिशाचानां रोगशान्त्यै व्यधाद् बलिम् ॥ ३९ ॥
सा दुष्टा राक्षसी पात्रेऽवतीर्णा जनमभ्यधात् । किं मां न वेत्सि रे मूढ ! राक्षसीं विश्वभक्षिणीम् ? ॥ ४० ॥
ततः प्रसादयामास जनस्तामर्चनादिभिः । दुष्टा स्पष्टमभाषिष्टानिष्टमेवं नृणामिति ॥ ४१ ॥
भस्मकर्दमसिन्दूरधूलीधूसरविग्रहाः । ब्रुवन्तोऽसभ्यवाक्यानि चत्वरे चत्वरे भृशम् ॥ ४२ ॥

यात्रयन्त्वः कृपाणानि भ्रमन्तु निखिले पुरे। रोगशान्तिर्यथा सद्यो जायेत कुशलं तथा ॥ ४३ ॥ (युग्मम्)
नग्नो लोकः स्वभावेन कलिकेलिकुतूहली। तदादेशाद् विशेषेण त्यक्तोत्तमजनस्थितिः ॥ ४४ ॥
असभ्यवचःप्रलापेषु भस्मोच्छालनकर्मसु। फल्गुगानेषु नृत्येषु प्रवृत्तो ग्रहिलक्रियः ॥ ४५ ॥ (युग्मम्)
ततः स्वस्वप्रदेशेषु फाल्गुने पूर्णिमादिने। प्रतिवर्षं रजःपर्व प्रख्यातं क्षोणिमण्डले ॥ ४६ ॥
एवं होलीरजःपर्व मिथ्यादृष्टिप्रवर्त्तितम्। विज्ञाः! विज्ञाय कर्त्तव्यं न श्रेयोऽर्थमिदं बुधैः ॥ ४७ ॥
सौभाग्यमायुरारोग्यमैश्वर्यं रूपसम्पदः। यदीच्छत जनाः! धर्मं यतध्वं तज्जिनोदिते ॥ ४८ ॥

यतः—

रूपं निष्प्रतिरूपमायुरतुलं नीरोगता सन्ततं सौभाग्यं भुवनाद्भुतं भवभृतां कीर्त्तिं जगद्व्यापिनीम्।
साम्राज्यं गजवाजिराजिकलितं ध्वस्ताऽऽपदः सम्पदो धर्मः कल्पतरुः प्रयच्छति फलश्रेणीमिमामीहिताम् ॥ १ ॥

एवं श्रीधर्ममाहात्म्यं विज्ञाय जगदद्भुतम्। मिथ्यात्वपरिहारेण तत्र यत्नो विधीयताम् ॥ ४९ ॥
इत्थं सर्वोपकारार्थं मिथ्यात्वापोहहेतवे। प्रबन्धः †प्रथितोऽस्त्येष विज्ञानां वाचनोचितः ॥ ५० ॥

इति होलीरजःपर्वप्रबन्धकथा समाप्ता।

† कथितोऽस्त्येष जिनसुन्दरसूरिणेति पाठान्तरम्।

